ॐ

यस्तुकैस्तपनान्वयोऽतुलधृतिः श्रुत्यब्जनागैर्वृतं
पश्यन् रोषमुपागतो वृषपती रामो यथा रावणम् ।
चक्रे भारतकं रवेण विवृतं पुण्येन तेजोवपुः
सोऽयं मे हृदि राजतामृषिवरो गोविन्दसिंहो गुरुः ॥



श्रीमन्निखिलशास्त्रनिष्णात

# पण्डित स्वामि हरिप्रसाद परमहंस.

# अथ वैशेषिकदर्शनम् ।

## प्रथमोऽध्यायः ।

### आद्यमाह्निकम्

अर्थतत्त्वस्य वेत्तारं वीतमन्युं तपोनिधिम् ।
कणादं काश्यपं वन्दे देशिकेन्द्रं महामुनिम् ॥ १ ॥
ध्यायन्नर्थविदामुक्तिं चिन्तयन् वेदपद्धतिम् ।
कुर्वे काणादसूत्राणां वृत्तिमादाय सन्मतिम् ॥ २ ॥

अथ निःश्रेयसासाधारणं हेतुं तत्त्वज्ञानमुपदिदिक्षुराचार्य्यस्तत्परं शास्त्रमारभमाणः पूर्वन्तावत्तद्धेतुभूतं धर्मं व्याख्यातुं प्रतिजानीते ।

**"अथातो धर्मं व्याख्यास्यामः ॥ १ ॥**

अथ=शिष्यजिज्ञासानन्तरमतः=यतः शुश्रूषवः श्रेयोऽर्थिनः श्रवणादिपटवोऽनसूयकाश्चान्तेवासिन उपसेदुरस्माद् धर्मं=धर्मपदार्थं व्याख्यास्यामः=लक्षणप्रमाणाभ्यां निरूपयिष्याम इत्यर्थः ॥ १ ॥

नन्तु धर्मस्य किं लक्षणं ? तत्राह ।

**"यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः ॥ २ ॥**

अभ्युदयनिःश्रेयससिद्धिः=इह वाऽमुत्र वाऽभीष्टकार्य्याणामुदयोऽभ्युदयः, त्रिविधदुःखात्यन्तनिवृत्तिलक्षणा मुक्तिर्निःश्रेयसं, निःशेषेण श्रेयस्त्वात्, तत्र हि सर्वं श्रेयः परिसमाप्यते, न किञ्चिदवशिष्यते, तयोरभ्युदयनिःश्रेयसयोः सिद्धिः=प्राप्तिर्यतः=यस्मात्साक्षात्परम्परया वा भवति स धर्म इत्यर्थः ।

**तत्राभ्युदयस्य** साक्षान्निःश्रेयसस्य च तत्त्वज्ञानोत्पादनेन परम्परयेति विवेकः ।

**अभ्युदयस्तत्त्वज्ञानं** तद्द्वारा निःश्रेयसस्य सिद्धिर्यतः स धर्म इत्युदयनाचार्य्यः ॥ २ ॥

**नन्वेवंलक्षणे** धर्मे किं प्रमाणं ? तत्राह ।

**"तद्वचनादाम्नायस्य प्रामाण्यम् ॥ ३ ॥**

तद्वचनात्=भावप्रधानो निर्देशः । तस्य=उक्तलक्षणधर्मस्यवचनं= निर्वचनं=याथातथ्येन प्रतिपादनमस्ति यत्र, तस्य भावस्तत्त्वं, तस्मात्=तद्वचनत्वादाम्नायस्य=ऋग्यजुःसामाथर्वनाम्नो भगवतो वेदस्य प्रामाण्यं=धर्मे प्रमाणत्वमित्यर्थः ।

तदेतदुक्तं तन्त्रान्तरेऽपि. **मी. अ. १ पा. १ सू. २.**

**"चोदनालक्षणोऽर्थो धर्मः** इति.

भगवता मनुनाप्युक्तम् **अ. २ श्लो. १३.**

**"धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः** इति ।

तथा चाभ्युदयनिःश्रेयसकामैः पुरुषधौरेयैर्यत्नतो वैदिको धर्मोऽनुष्ठेयोऽवैदिकश्च परिहेयः इत्युपदिष्टं भवति, तच्चाह भगवान् मनुः **अ.४ श्लो.१४.**

**वेदोदितं स्वकं कर्म नित्यं कुर्य्यादतन्द्रितः ।**
**तद्धि कुर्वन् यथाशक्त्या प्राप्नोति परमां गतिम्** इति।

परमां गतिं=निःश्रेयसमित्यर्थः ।

**ननु** वेदप्रमाणको धर्मो व्याख्येयः । स न व्याख्येयत्वमर्हति यतो वयं वेदप्रामाण्य एव विप्रतिपद्यामहे, तत्राह तद्वचनात्=तेनेश्वरेण प्रणयनादाम्नायस्य=वेदस्य प्रामाण्यं=प्रमाणत्वमित्यर्थः । तथा च वेदस्येश्वरवचनत्वेन प्रामाण्ये निर्बाधे तत्प्रमाणको धर्मो व्याख्येय एवेति भाव इत्युदयनाचार्य्यः ॥ ३ ॥

**लक्षणप्रमाणाभ्यां** धर्मं व्याख्याय तद्धेतुकात्तत्त्वज्ञानान्निःश्रेयसप्रतिज्ञामाह ।

**"धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम् ॥ ४ ॥**

धर्मविशेषप्रसूतात्=वेदचोदितैर्निष्कामकर्मभिर्जन्यः पुण्यविशेषो धर्मविशेषस्तेन प्रसूतात्=उत्पन्नात् तत्त्वज्ञानादित्यन्वयः । द्रव्यगुणकर्मसामान्यविशेषसमवायानां=द्रव्याणि च गुणाश्च कर्माणि च सामान्यञ्च विशेषाश्च समवायश्च ते तथा, तेषां पदार्थानां=पदवृत्तिविषयाणां षण्णामर्थानां साधर्म्यवैधर्म्याभ्यां=बहुव्रीहेर्भावप्रत्ययः समानोधर्मः=अनुगतोधर्मः=साधारणोधर्मः=साधर्म्यम्, विशेषोधर्मः=व्यावृत्तोधर्मः=असाधारणोधर्मो वैधर्म्यम्, ताभ्यां लक्षणभूताभ्यां तत्त्वज्ञानात्=असमर्थसमासोऽयं, द्रव्यादीनां तत्त्वस्येत्यन्वयात्, समानासमानजातीयव्यवच्छिन्नं विविक्तानारोपितं स्वरूपं तत्त्वं, तस्य ज्ञानात्=साक्षात्कारान्निःश्रेयसं=पूर्वोक्तलक्षणं कैवल्यं भवतीत्यर्थः ।

**शरीरे**न्द्रियादिसर्वानात्मपदार्थविविक्तात्मतत्त्वस्य ज्ञानं हि मिथ्याज्ञानप्रतिद्वन्द्वितया निःश्रेयसस्यासाधारणो हेतुरिति सिद्धान्तः। तच्चात्मतत्त्वज्ञानं विविक्ततत्तत्पदार्थस्वरूपज्ञानं विना न सुशकम् । पदार्थाश्च साधर्म्यवैधर्म्याभ्यामेव तत्त्वतो विविच्यन्ते । यथा वक्रकोटरादिभ्यां स्थाण्वादयो नान्यथा । ते चावान्तरभेदेन बहुधा सन्तोऽपि समासतः षडेव सम्भवन्ति । तत्रापि द्रव्यं गुणः कर्मेति त्रय एव मुख्याः पदार्थाः **"अर्थ इति द्रव्यगुणकर्मसु"** इति वक्ष्यमाणसूत्रात्, सामान्यं विशेषः समवायश्चेति त्रयस्तच्छेषत्वादुपपदार्थाः । नातोऽधिका अभ्युपगम्यन्ते, षट्स्वेवाधिकानामन्तर्भावसिद्धेः । तस्माद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां षण्णां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वस्य ज्ञानान्निःश्रेयसमिति प्रतिज्ञातमिति भावः ।

**तत्र** द्रव्यगुणकर्मसामान्यविशेषसमवायानामिति शैषिकी षष्ठी, साधर्म्यवैधर्म्याभ्यामिति लक्षणे तृतीया, तत्त्वस्य ज्ञानादिति कर्मणि षष्ठी इति विवेकः ।

**इदमत्र बोध्यम्.** यद्यपि **"तमेव विदित्वाऽतिमृत्युमेति नान्यःपन्था विद्यतेऽयनाय" यजुः–अ. ३१ मं. १८ "तमेव विद्वान् न बिभाय मृत्योरात्मानं धीरमजरं युवानम्" अथर्व–का. १० सू. ८ मं. ४४. "ब्रह्मविदाप्नोतिपरम्" तै. २–१. १.** इत्यादिश्रुतेः साक्षात्परमात्मापरोक्षज्ञानमेव मोक्षस्यासाधारणो हेतुर्नविविक्तात्मतत्त्वज्ञानं, तथापि विविक्तात्मतत्त्वज्ञानाभावे परमात्मज्ञानासम्भवात् तद्भावे चावश्यंभावादात्मतत्त्वज्ञानमेव मोक्षस्यासाधारणो हेतुरिति राद्धान्तः । अत एव च सांख्ययोगन्यायवैशेषिकादिषु पञ्चसु वैदिकदर्शनेषु महता प्रबन्धेन विविक्तात्मतत्त्वज्ञानमुपदिश्य पश्चादुत्तरमीमांसायां परमात्मनो ज्ञानमुपदिश्यते **"अथातो ब्रह्मजिज्ञासा"** इति । विविक्तात्मतत्त्वज्ञानस्य हि फलं मिथ्याज्ञानादिनिवृत्त्या त्रिविधदुःखात्यन्तनिवृत्तिः, परमात्मवेदनस्य च शाश्वतसुखोपभुक्तिः, तथा चाम्नातमुपनिषत्सु. **"यदा पश्यः पश्यते रुक्मवर्णम्" मुं. ३–१–३ "एको वशी सर्व भूतान्तरात्मा एकं रूपं बहुधा यः करोति तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्" कठ. २–५–१२** इति । पश्यः=विविक्तात्मद्रष्टा, रुक्मवर्ण=स्वप्रकाशं, शाश्वतं सुखं=परमात्मनः स्वरूपभूतं सुखम्, अस्यैव नामान्तरं परमं पदं, परमं धाम, परमा गतिः, परमा शान्तिः । तच्चैतदात्मतत्त्वज्ञानमधिकारिणां श्रवणमननादिजनितसंस्कारसचिवेन धर्मविशेषात्सत्त्वोद्रिक्तौनितरांशुद्धेन मनसा जन्यते, परमात्मदर्शनन्तु विविक्तात्मतत्त्वेन स्वेनेति विशेष इति ।

उदयनाचार्य्यस्त्वभावोऽपि सप्तमः पदार्थोऽत्र सङ्ग्रहीतव्य इति मन्यते । तथा च तस्य किरणावल्यामुल्लेखः **"एतेन भावपदार्था एव प्रधानतयोद्दिष्टा वेदितव्याः, अभावस्तु स्वरूपवानपि पृथङ्नोद्दिष्टः, प्रतियोगिनिरूपणाधीननिरूपणत्वान्नतु तुच्छत्वादिति ।** सोऽयमभावश्चतुर्विधः प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावोऽन्योऽन्याभावश्चेति । कार्य्यस्योत्पत्तेः पूर्वं योऽभावः स **प्रागभावः** । स चानादिः सन्नपि विनश्यति, विनाशश्च तस्य वस्तूत्पाद एव नातिरिक्तः

कश्चित्। न च वस्तुनि निवृत्ते पुनः प्रागभावोपलब्धिप्रसङ्ग इति वाच्यम्। वस्तुवद् वस्त्ववयवानामपि प्रागभावविनाशरूपत्वाभ्युपगमात्। अतो **विनाश्यभावत्वं प्रागभावत्वमि**ति निष्कर्षः। उत्पन्नस्य विनाशात्परं योऽभावः स **प्रध्वंसाभावः,** स चोत्पत्तिमानप्यनन्तो न कदाचिद्धटवत्प्रध्वस्यते, तेन **जन्याभावत्वं प्रध्वंसाभावत्वमि**ति फलितार्थः। अथ कोऽयं प्रध्वंसस्योत्पादः ? प्रागसतः पश्चाद्भावः। कः पुनस्तस्य प्रागभावः ? यस्यार्थस्य यः प्रध्वंसः तस्यार्थस्य स्वरूपस्थितिरेव तत्प्रध्वंसस्य प्रागभावः—तन्नाशश्च ध्वंसोत्पत्तिरिति। यस्त्वेकत्र सतोऽर्थस्यान्यत्र त्रैकालिकोऽभावः **सोऽत्यन्ताभावः**। स चानादिरनन्तो, न कदाचित्प्रसूयते, न वा कदाचित्प्रदूयते, नित्यत्वात्। अत एव **नित्यसंसर्गाभावत्वमत्यन्ताभावत्वमि**ति तन्निष्कृष्टं लक्षणम्। त्रयश्चैतेऽभाववादिनां संसर्गाभावनाम्ना परिभाष्यन्ते। घटः पटो न भवति, पटश्च घटो न, इत्यादिरूपो य एकस्य भावस्यान्यभावात्मनाऽभावः=**तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभाव** इति यावत्, **सोऽन्योऽन्याभाव** इति। कैश्चित्तूपजनापायशाली समयविशेषे प्रतीयमानः पञ्चमः **सामयिकाभावो**ऽप्यभ्युपगम्यते। स चोदयनाचार्य्यस्य नात्यन्ताभावतोऽतिरिच्यते। तस्य तत्प्रतीतौ च प्रतियोगिसम्बन्धस्य प्रागभावप्रध्वंसाभावौ नियामकौ, घटवति भूतले घटसम्बन्धस्य प्रागभावप्रध्वंसयोरसत्त्वाद् घटात्यन्ताभावस्य नित्यत्वेन तत्र सत्त्वेऽपि न तद्बुद्धिरिति सर्वमनवद्यम्। तत्र घटाभावाभावो घटस्वरूप इति वाचस्पतिमिश्राः "**नो खल्वभावाभावो नाम कश्चिदन्यो भावात्, नापि भावाभावोऽन्योऽभावादि**ति तात्पर्य्यटीकायामुक्तत्वात्। तृतीयाभावः स इति तु नवीनाः। तस्य च प्रथमाभावस्वरूपत्वान्नानवस्थादोषः। सामान्याभावस्तु विशेषाभावसमुदायादतिरिक्त एवेति सर्वेषां समानम्। अभावत्वञ्च भावभिन्नत्वमिति केचित्। निषेधमुखप्रतीतिविषयत्वमित्यपरे। द्रव्यादिषट्कान्योऽन्याभाववत्त्वमित्यन्ये। समवायान्यत्वे सत्यसमवायित्वमिति मानमनोहरकारः। तादात्म्यसम्बन्धावच्छिन्नभावत्वावच्छिन्नभावनिष्ठप्रतियोगितानिरूपितानु

योगिताविशेषवत्त्वमित्यवोध्यः । वैशेषिकाणाञ्चेमे चत्वारः पृथक्त्वभेदविशेषत्वाद्गुणे तस्मिन्नन्तर्भवन्ति, नातो वैशेषिकाचार्य्यैरेषोऽभावपदार्थः पृथगुद्दिष्टः। पृथक्त्वमयोगो वैलक्षण्यमनेकता चेत्यनर्थान्तरम्, तेनायोगरूपे तस्मिन् प्रागभावादित्रयस्य, वैलक्षण्यरूपे चान्योऽन्याभावस्य तुरीयस्यान्तर्भाव इति द्रष्टव्यम् ॥ ४ ॥

**तत्र प्रथमोद्दिष्टस्य द्रव्यपदार्थस्य विभागमाह।**

**पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा मन इति द्रव्याणि ॥ ५ ॥**

पृथिवी=भूरापः=वारि तेजः=ज्योतिर्वायुः=मरुदाकाशं=व्योम कालः=समयो दिग्=आशाऽऽत्मा=क्षेत्रज्ञो मनः=अन्तःकरणं=चित्तमिति=एतानि नव द्रव्याणि=द्रव्यपदवाच्यानि=द्रव्यपदार्थ इत्यर्थः ।

**तत्र** पृथिव्यापस्तेज इति प्रथमानि त्रीण्यनित्यानि, वायुराकाशं कालो दिगात्मा मन इति चरमाणि पञ्च नित्यानि। तत्राप्यात्मा द्विविधो जीवात्मा परमात्मा च, तौ च द्वौ पृथिव्यादीनां मूलकारणं प्रकृतिश्चेति त्रीणि परमार्थतो नित्यानि। तत्त्वञ्चोत्पत्तिविनाशशून्यत्वं, प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वमिति यावत्। वायुराकाशं कालो दिङ्मन इति च पञ्च चिरस्थायित्वाद् व्यवहारभूमौ नित्यानि। तत्रामोक्षं स्थायि मनः, तदितरच्चतुष्टयञ्चामहाप्रलयम्। तत्र पृथिव्यादीनां यन्मूलकारणं तत्सांख्ययोगवैदान्तिकानां प्रकृतिनाम्ना वैशेषिकगौतमजैमिनीयानाञ्च तदवस्थाविशेषत्वात् परमाणुनाम्ना व्यपदिश्यते, त्रिगुणत्वञ्चोभयत्रोभयेषां समानमिति विवेकः ।

**पृथिव्यादीनि** चत्वार्य्यनित्यानि, तदितराणि पञ्च नित्यानीति केचित्

**यत्तु** नवीनतराः केचिदाहुः । अत्रापां पृथग्वचनं न कर्तव्य, तासां विजातीयवायुद्वयसन्निपातजन्यत्वेन तद्ग्रहणादेव ग्रहणोपपत्तेरिति । तदयुक्तम्। अपां विजातीयवायुद्वयसन्निपाताभिव्यङ्ग्यत्वेनाभिव्यञ्जकग्रहणाद्ग्रहणानुपपत्तेः । ययोर्हि वाय्वोः सन्निपातादाप उत्पद्यमाना दृश्यन्ते, तत्रापि ताः सूक्ष्मभूता विद्यन्ते, केवलं प्रक्रियाविशेषात्तदानीमभिव्यज्यन्ते। नचा-

भिव्यज्यमानानां तासामभिव्यञ्जकग्रहणेन ग्रहणमुपपद्यते, अर्थान्तरभूतत्वात् । अतो युक्तं तासां वायोः पृथग् वचनमिति ॥ ५ ॥

द्रव्यं विभज्य गुणपदार्थं विभजते ।

**"रूपरसगन्धस्पर्शाः संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणाः ॥ ६ ॥**

गुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दाः इति सप्त चकारेण समुच्चिनोति रूपादिशब्दान्ताश्चतुर्विंशतिर्गुणाः=गुणपदवाच्याः=गुणपदार्थं इत्यर्थः ।

तत्र द्रवत्वं सांसिद्धिकं नैमित्तिकञ्चेति द्विविधम् । वेगस्थितिस्थापकभावनाभेदात्संस्कारस्त्रिविधः । रूपरसगन्धस्पर्शस्नेहसांसिद्धिकद्रवत्वशब्दबुद्धिसुखदुःखेच्छाप्रयत्नधर्माधर्मभावनासंस्काराः इति विशेषगुणाः । ते चामी सामान्यविशेषवन्तः सन्तः स्वाश्रयभूतं द्रव्यं द्रव्यान्तराद् विशिंषन्ति=व्यवच्छिन्दन्ति, तस्माद् विशेषगुणा इति व्यवह्रियन्ते । या हि जातिर्द्रव्यविभाजकोपाधिद्वयसामानाधिकरण्यं न भजते न वा द्रव्यं कर्म चाधिशेते तादृक् जातिमत्त्वं, जातिमत्त्वे वा बाह्यैकेन्द्रियमात्रग्राह्यत्वं विशेषगुणत्वमिति तल्लक्षणं बोध्यम् ।

नवीनास्तु "भावनाऽन्यो यो वायुवृत्तिवृत्तिस्पर्शावृतिधर्मसमवायी तदन्यत्वे सति गुरुत्वाजलद्रवत्वान्यगुणत्वं विशेषगुणत्वमिति तल्लक्षणमाचक्षते। संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वनैमित्तिकद्रवत्वगुरुत्ववेगस्थितिस्थापकसंस्काराः इति सामान्यगुणाः । न चैते विशेषगुणा इव स्वाश्रयभूतं द्रव्यं द्रव्यान्तराद् विशिंषन्ति, सर्वान् प्रति समानत्वात् । तत्त्वञ्च विशेषगुणभिन्नगुणत्वमिति तेषां पर्य्यवसितं लक्षणम् । प्रतिद्रव्यञ्चैषां रूपादिगुणानां विभागः कारिकासु पठ्यते.

**स्पर्शादयोऽष्टौ वेगाख्यः संस्कारो मरुतो गुणाः ।**
**स्पर्शाद्यष्टौ रूपवेगौ द्रवत्वं तेजसो गुणाः ॥ १ ॥**
**स्पर्शादयोऽष्टौ वेगश्च द्रवत्वञ्च गुरुत्वकम् ।**
**रूपं रसस्तथा स्नेहो वारिण्येते चतुर्दश ॥ २ ॥**

**स्नेहहीना गन्धयुताः क्षितावेते चतुर्दश ।**
**बुद्ध्यादिषट्कं संख्यादिपञ्चकं भावना तथा ॥ ३ ॥**
**धर्माधर्मौ गुणा एते आत्मनः स्युश्चतुर्दश ।**
**संख्यादिपञ्चकं कालदिशोः शब्दश्च ते च खे ॥ ४ ॥**
**संख्यादिपञ्चकं बुद्धिरिच्छा यत्नोऽपि चेश्वरे ।**
**परत्वापरत्वे संख्यादिपञ्च वेगश्च मानसे ॥ ५ ॥** इति.

केचित्तु शक्तिमपि गुणान्तरमाहुः । केचिद्द्रव्यान्तरं । वैशेषिकानाञ्च यस्य भावस्य या शक्तिः सा तद्रूपैव न ततोऽतिरिक्तेति न गुणान्तरं, तादात्म्येन वर्तमानत्वात्, गुणानाञ्च समवाय इति । तथा लघुत्वमपि सांख्यादिवत् केचिद्गुणान्तरमाहुः । तत्तु युक्तं पश्यामः । संयोगविभागवत् परस्परप्रत्यनीकभावापन्नयोर्गुरुत्वलघुत्वयोरुभयोरपि स्वीकारस्यावश्यकत्वात् । एकेनापरस्य सिद्धेः संयोगविभागयोरपि वक्तुं शक्यत्वात् । मृदुत्वकठिनत्वयोस्त्ववयवसयोगविशेषात्मकत्वात् शौर्य्यौदार्य्यकारुण्यदाक्षिण्यौग्र्यादीनाञ्चप्रयत्नादिष्वन्तर्भावान्न गुणान्तरत्वं युक्तमिति पञ्चविंशतिर्गुणाः । तत्र बलवतोऽपि परस्य पराजयाय प्रत्युत्साहः शौर्य्यं प्रयत्नः, सतत सन्मार्गवर्तिनी बुद्धिरौदार्य्यम्, परदुःखप्रहाणेच्छा कारुण्यम्, तत्त्वाभिनिवेशिनी बुद्धिर्दाक्षिण्यम्, आत्मन्युत्कर्षप्रत्यय औग्र्यं बुद्धिरिति विवेकः ॥ ६ ॥

**कर्म**विभागमाह ।

**उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्माणि ॥ ७ ॥**

येन कर्मणा वस्तूर्ध्वं क्षिप्यते तदुत्क्षेपणम्, येनावाचीनं क्षिप्यते तदवक्षेपणम्, उत्क्षेपावक्षेपौ तु संयोगविशेषौ, सत्यारम्भके संयोगे येनापरोऽवयवानां संयोगस्तदाकुञ्चनम्, येन तत्प्रतिद्वन्द्वी विभागस्तत्प्रसारणम्, यच्चान्यत्किञ्चिद्भ्रमणरेचनस्यन्दनोर्ध्वज्वलनतिर्य्यग्गमनादिकं कर्म तत्सर्वं गमनमिति=एतानि पञ्च कर्माणि=कर्मपदार्थ इत्यर्थः ॥ ७ ॥

द्रव्यगुणकर्माणि विभज्य तत्त्वज्ञानानुकूलत्वात्तेषां साधर्म्यवैधर्म्यप्रकरणमारभमाणः पूर्वन्तावद् द्रव्यगुणकर्मणां साधर्म्यमाह ।

**"सदनित्यं द्रव्यवत्कार्यं कारणं सामान्यविशेषवदिति द्रव्यगुणकर्मणामविशेषः ॥ ८ ॥**

अत्र प्रकरणे मूलकारणं प्रकृतिं जीवात्मानं परमात्मानञ्च विहाय शिष्टानां त्रयाणामविशेषो वा विशेषो वा द्रष्टव्यः । अथवोपाधिं पुरस्कृत्य सर्वत्राव्याप्तिदोषः परिहरणीयः । भावप्रधानश्चेह निर्देशः । सत्=सत्तावत्त्वम् । अनित्यं=विनाशित्वं=भूत्वाऽभावित्वम्, **अथवा** ध्वंसप्रतियोगिवृत्तिपदार्थविभाजकोपाधिमत्त्व तत्त्वम् । द्रव्यवत्=द्रव्यं समवायिकारणतयाऽस्यास्तीतिद्रव्यवत्=द्रव्यसमवायिकारणकत्वम्, **अथवा** द्रव्यसमवायिकारणकवृत्तिपदार्थविभाजकोपाधिमत्त्वं तत्त्वम् । कार्यम्=उत्पत्तिमत्त्वम्=अभूत्वा भावित्वं=प्रागभावप्रतियोगित्वम्, **अथवा** प्रागभावप्रतियोगिवृत्तिपदार्थविभाजकोपाधिमत्त्वं तत्त्वम् । कारणं=कार्य्यजनकत्वम्, **अथवा** ज्ञानेतरकार्य्यनियतपूर्ववर्त्तिजातीयवृत्तिपदार्थविभाजकोपाधिमत्त्वं तत्त्वम् । तेन विषयतया स्वसाक्षात्कारे कारणे गोत्वादौ नातिव्याप्तिर्नवाऽजनके पारिमाण्डल्यादावव्याप्तिः । सामान्यविशेषवत्=अनुवृत्तिहेतुत्वात्सामान्यं व्यावृत्तिहेतुत्वाद्विशेषः, सामान्यञ्च तद्विशेषश्च ते सामान्यविशेषाः=द्रव्यत्वादयस्तद्वत्त्वमिति द्रव्यगुणकर्मणां त्रयाणामविशेषः=विशेषणं विशेषः, न विशेषोऽविशेषः=समानो धर्मः=साधर्म्यमिति यावदित्यर्थः ।

यथा सत्तादिमत्त्वं द्रव्यस्य तथा गुणकर्मणोरपि न तत्रास्ति कश्चिद्विशेष इत्यविशेष इति भावः ॥ ८ ॥

त्रयाणां साधर्म्यमुक्त्वा द्वयोः साधर्म्यमाह—

**"द्रव्यगुणयोः सजातीयारम्भकत्वं साधर्म्यम् ॥ ९ ॥**

साधर्म्यार्थकाविशेष इति पदानुवृत्तिसंभवेऽपि तत्रार्थान्तरभ्रमो माभूदिति तदर्थविस्पष्टप्रतिपत्तये पुनः साक्षात्साधर्म्यपदमुपात्तम् । द्रव्यगुणयोः=द्रव्याणां गुणानाञ्च सजातीयारम्भकत्वं=स्वसमानजातीयारम्भकत्वं साधर्म्यं=समानो धर्मः=अविशेष इत्यर्थः ॥ ९ ॥

तदेव स्पष्टयति—

**"द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम् ॥ १० ॥**

द्रव्याणि=पृथिव्यादीनि द्रव्याणि द्रव्यमारभमाणानि सन्ति द्रव्यान्तरं=स्वसमानजातीयमेवान्यद् द्रव्यमारभन्ते=प्रारभन्ते न विजातीयम्, तद्यथा पृथिवी पृथिव्यन्तरम्, आपोऽवन्तरं, तेजस्तेजोऽन्तरम्, एवं गुणाश्च=रूपादयो गुणाश्च गुणमारभमाणा गुणान्तरं=स्वसमानजातीयमेवान्य गुणमारभन्ते, न विजातीयं, तद्यथा रूप रूपान्तरं, रसो रसान्तरं, गन्धो गन्धान्तरमित्यर्थः

यद्यपि सूक्ष्मवाय्वाकाशयोः स्थूलवाय्वाकाशारम्भकत्वमस्ति । तथापि स्थूलयोस्तयोः पृथिव्यादिवत्स्वसमानजातीयद्रव्यान्तरारम्भकत्वं नास्ति । न वा दिक्कालमनसा । न वा घटपटादीनां । न वा तत्रस्थानां गुणानाम् । अतोऽत्रान्त्यावयविविभुद्रव्याणि तथाऽन्त्यावयविगुणान् द्वित्वद्विपृथक्त्वपरत्वापरत्वादिगुणाँश्च विहाय शिष्टयोर्द्रव्यगुणयोः सजातीयारम्भकत्वं साधर्म्यं द्रष्टव्यम् । **अथवा** सजातीयारम्भकवृत्तिपदार्थविभाजकोपाधिमत्त्व तदर्थोऽध्यवसातव्यः ॥ १० ॥

**ननु** यथा द्रव्याणि द्रव्यान्तरमारभन्ते, गुणाश्च गुणान्तरं, तथा कर्माणि कर्मान्तरमारभन्ते इति कुतो नोक्तं? तत्राह—

**"कर्म कर्मसाध्यं न विद्यते ॥ ११ ॥**

कर्म=पञ्चसु कर्मसु किमपि कर्म कर्मसाध्य=कर्म साध्यम्=आरभ्यं यस्य तत्तथा न विद्यते=न भवतीत्यर्थः ।

कर्म ह्युत्क्षेपणं सद्विभागमुपजनयति, तस्य च स्वेनैवोत्पन्नेन तेनोपजननात्प्रयोजनान्तराभावे पुनस्तस्य तदर्थकर्मान्तरारम्भानुपपत्तेरिति भावः ।

यत्त्ववयवचलनेनावयविनि चलनाख्यं कर्म, न तत्कर्मजन्यम्, अपि च वेगजन्यमिति ध्येयम् ॥ ११ ॥

द्रव्यगुणकर्मणां साधर्म्यमुक्तम् । इदानीं गुणकर्मभ्यां द्रव्यस्य वैधर्म्यमाह—

**न द्रव्यं कार्य्यं कारणञ्च बधति ॥ १२ ॥**

द्रव्यं=कर्मणि द्वितीया, कारणद्रव्यं कार्य्यद्रव्यञ्च कार्य्यं कारणञ्च=

यथासंख्यमन्वयः, कार्य्यद्रव्यं कारणद्रव्यञ्च न वधति=सौत्रो निर्देशः, न बधयति=न हिनस्ति=न नाशयतीत्यर्थः ।

आश्रयनाशारम्भकसंयोगनाशाभ्यामेव द्रव्यनाशस्य ध्रौव्यादिति भावः ॥ १२ ॥

**ननु** गुणाः कीदृशः ? तत्राह—

**"उभयथा गुणाः ॥ १३ ॥**

उभयथा=उभयप्रकाराः गुणास्तान् कार्य्यमपि बधति कारणमपि बधतीत्यर्थः ।

तद्यथादिमं शब्दं कार्य्यभूतः स्वोत्तरः शब्दः, अन्तिमञ्च तमुपान्त्यः कारणभूत इति ॥ १३ ॥

**ननु** कर्म कीदृग् भवति ? तत्राह—

**"कार्य्यविरोधि कर्म ॥ १४ ॥**

कार्य्यविरोधि=कार्य्यं=स्वजन्यमुत्तरसंयोगादि विरोधि=नाशकं यस्य । तत्तथा कर्मेत्यर्थः ।

कर्म हि विभागोत्पादनानन्तरमुत्तरसंयोगमुत्पाद्य विनश्यतीति कार्य्यविरोधि कर्मेति भावः ॥ १४ ॥

**ननु** यस्य द्रव्यस्येदृक्स्वभावो न तत् कार्य्यं बधति, न कारणं, तस्य किंलक्षणं ? तत्राह—

**"क्रियागुणवत्समवायिकारणमिति द्रव्यलक्षणम्॥१५॥**

क्रियागुणवत्=भावप्रधानो निर्देशः । क्रियावत्त्वं गुणवत्त्वं समवायिकारणत्वमिति त्रयं द्रव्यलक्षणं=द्रव्यस्य=प्रथमोद्दिष्टद्रव्यपदार्थस्य लक्षणं=समानासमानजातीयव्यवच्छेदकमित्यर्थः ।

यत्क्रियावद्, गुणवत्, समवायिकारणं, तद् द्रव्यमिति भावः ।

**तत्र** क्रियावत्त्वस्याकाशादौ गुणवत्त्वस्य चोत्पत्तिकालावच्छेदेन घटादावव्याप्तेः समवायिकारणमिति तृतीयलक्षणमुपात्तम् । तदपि परमात्मानं न व्याप्नोति, तस्माद् द्रव्यत्वजातिमत्त्वं द्रव्यत्वमिति निर्दुष्टं लक्षणम् ।

अव्याप्तिरतिव्याप्तिरसंभवश्चेति त्रयो लक्षणदोषाः । तत्र लक्ष्यैकदेशावृत्तित्वमव्याप्तिः । यथा गोः कपिलत्वम् । लक्ष्यवृत्तित्वे सत्यलक्ष्यवृत्तित्वमतिव्याप्तिः । यथा गोः शृङ्गित्वम् । लक्ष्यमात्रावृत्तित्वमसंभवः । यथा गोरेकशफवत्त्वम् । एतद्दोषत्रयञ्च यत्र न विद्यते सोऽयमसाधारणो धर्मो निर्दुष्टं लक्षणं, यथा गोः सास्नादिमत्त्वम् । असाधारणत्वञ्च लक्ष्यतावच्छेदकसमनियतत्वम् । यस्य लक्षणं क्रियते, तल्लक्ष्यं, तच्च यद्धर्मावच्छिन्न स एव धर्मो लक्ष्यतावच्छेदक इति विवेकः ॥ १५ ॥

**ननु गुणस्य किं लक्षण? तत्राह—**

**"द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षणम् ॥ १६ ॥**

द्रव्याश्रयी=द्रव्यमाश्रयितु शीलमस्य स द्रव्याश्रयी, तदेतद् द्रव्येऽतिव्याप्तमतो विशिनष्टि अगुणवान्=गुणवद्भिन्नः, तथापि कर्मणि गतमतो विशिनष्टि सयोगविभागेष्वकारणमनपेक्षः=संयोगविभागेषु जनयितव्येष्वनपेक्षः सन् कारणं कर्मपदार्थः, तद्भिन्नो यः स गुण इति गुणलक्षण=गुणपदार्थलक्षणमित्यर्थः ।

यो द्रव्यमाश्रयति, गुणवाँश्च न भवति, न चानपेक्षः सन् संयोगविभागेषु कारण भवति, स गुण इति भावः ।

यद्यप्येतल्लक्षण सामान्यादिष्वप्यतिप्रसज्यते, तथाप्याचार्य्यास्तेषां व्यतिरेकं कर्मवन्नाभिदधति, तेन स्पष्टमवगम्यते न सामान्यादयो द्रव्यादिसमाः पदार्थाः, किन्तु तच्छेषत्वादुपपदार्था इत्यनतिप्रसक्तिः । **अथवा** तत्रातिप्रसक्तिवारणाय सामान्यवान् इत्यधिकं लक्षणे निवेशनीयम् । सामान्यादयस्तु न सामान्यवन्तः । गुणत्वजातिमत्त्व वा गुणत्वमिति लक्षणं निश्चेयम् ॥ १६ ॥

**ननु कर्मणः कि लक्षणं? तत्राह—**

**"एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणमिति कर्मलक्षणम् ॥ १७ ॥**

एकद्रव्यम्=एकमेव द्रव्यमाश्रयो यस्य तदेकद्रव्यम्, अगुण=न विद्यते गुणो यस्मिन् तदगुणं, संयोगविभागेष्वनपेक्षकारणं=सयोगविभागेषु जनयितव्येषु स्वोत्पत्त्यनन्तरोत्पत्तिकं भावान्तरं नापेक्षते कारणञ्च भवति यत् तत्कर्मेति कर्मलक्षणं=कर्मपदार्थलक्षणमित्यर्थ.।

कर्म हि स्वयमुत्पन्नं संयोगविभागौ जनयति, तज्जनने च कर्म यद्यपि समवायि द्रव्यं पूर्वसंयोगनाशञ्चापेक्षते, तथापि न तद्द्रव्यं कर्मोत्पत्त्यनन्तरोत्पत्तिकं, नापि पूर्वसंयोगनाशो भाव इति संयोगविभागेष्वनपेक्षकारणं सद् यद् गुणवन्न भवति द्रव्यञ्चैकमाश्रयति तत्कर्मेति भावः॥ १७॥

**ननु** किं पुनरेषां साधर्म्यं? तत्राह—

**"द्रव्यगुणकर्मणां द्रव्यं कारणं सामान्यम्॥ १८॥**

द्रव्यगुणकर्मणां=पूर्वोक्तलक्षणानां द्रव्यगुणकर्मणा द्रव्य कारणम्=एकद्रव्यकारणकत्वं सामान्यं=समानानां द्रव्यगुणकर्मणामिदं सामान्य=साधर्म्यमित्यर्थ.।

द्रव्यं द्रव्यमारभते गुणं कर्म चेति स्वसमवेतानां द्रव्यगुणकर्मणां कारण द्रव्यमित्येष तेषां समानो धर्म इति भावः॥ १८॥

साधर्म्यान्तरमाह—

**"तथा गुणः॥ १९॥**

द्रव्यगुणकर्मणां कारणं सामान्यमित्यनुवर्तते। द्रव्यगुणकर्मणां यथा द्रव्य कारणं तथा गुण इति द्रव्यगुणकर्मणामेकगुणकारणकत्वं सामान्यमित्यर्थः।

**तत्र** कारणद्रव्यसंयोगः कार्य्यद्रव्यस्य, कारणरूपादिकं कार्य्यरूपादेः, गुरुत्वादिकञ्चोत्क्षेपणादिकर्मण. कारणमित्युदाहरणविवेकः॥ १९॥

साधर्म्यान्तरमाह—

**"संयोगविभागवेगानां कर्म समानम्॥ २०॥**

कारणमित्यनुवर्तते। संयोगविभागवेगानां=सयोगस्य विभागस्य वेगस्य च कर्म कारणं=कर्मकारणकत्वं समानं=समानो धर्म इत्यर्थ.।

कर्म हि किञ्चित्संयुनक्ति वियुनक्ति च किञ्चिद् वेगञ्चादधाति क्वचिदिति संयोगविभागवेगानां कर्म कारणं समानमिति भावः ।

**तत्र** शरादौ जायमानं कर्म धनुरादिना तद्विभागस्योत्तरदेशेन च तत्सयोगस्य स्वाश्रये च वेगस्य कारणमित्युदाहरणविवेकः ॥ २० ॥

**ननु** सयोगविभागवेगानां कर्म कारणं समानमिति न्यूनमुच्यते, द्रव्याणामित्यपि वक्तव्यं, कर्मारब्धेनैवारम्भकसयोगेन तदुत्पत्तेस्तत्राह—

**"न द्रव्याणां कर्म ॥ २१ ॥**

कारणमित्यनुवर्तते । द्रव्याणां कर्म कारणं न भवतीत्यर्थः ॥ २१ ॥

**ननु** कस्माद् द्रव्याणा कर्म कारणं न भवति ? तत्राह—

**"व्यतिरेकात् ॥ २२ ॥**

द्रव्योत्पत्तिवेलायां कर्मणो व्यतिरेकात्=अभावादित्यर्थः ।

कर्म ह्यारम्भकसयोगं निर्वर्त्य निवर्तते, द्रव्यञ्च निवृत्ते तस्मिन्नुत्पद्यते । चेद्द्रव्याणां कर्म कारणं भवेत् तदाऽवश्यं तदुत्पत्तिपर्य्यन्तमवतिष्ठेत । न चावतिष्ठते । विनश्यदवस्थस्य च कारणत्व नोपपद्यते । तस्मात्परम्परया कारणं सदपि कर्म साक्षाद्द्रव्याणां कारणं न भवति । साक्षाच्च कारणत्वमत्र विवक्षितमिति भाव ॥ २२ ॥

कारणमुखेन सामान्यमुक्त्वा कार्य्यमुखेन तदाह—

**"द्रव्याणां द्रव्यं कार्य्यं सामान्यम् ॥ २३ ॥**

द्रव्याणाम्=एकशेषोऽत्र समासः, द्रव्ये च द्रव्याणि च, द्रव्याणि, तेषां द्रव्याणां द्रव्यंकार्य्यं=द्रव्यकार्य्यकत्व सामान्यं=समानभावः=साधर्म्यमित्यर्थः ।

यथा द्रव्याणां द्रव्य कारण तथा द्रव्य कार्य्यमिति द्रव्यकारणभाववद् द्रव्यकार्य्यभावोऽपि तेषां सामान्यमिति भावः ।

**तत्र** घट. कपालयो पटश्च तन्तूना कार्य्यमित्युदाहरणविवेकः॥२३॥

**ननु** यथा गुणा द्रव्यमाश्रयन्ति तथा कर्माण्यपि, तथा च गुणाना गुण इव कर्मणामपि कर्म कार्य्यं सामान्यं स्यात्, तत्राह —

**"गुणवैधर्म्यान्न कर्मणां कर्म ॥ २४ ॥**

कार्य्यमित्यनुवर्तते । गुणवैधर्म्यात्=सजातीयारम्भकत्वं गुणानां साधर्म्यं, तद्विरुद्धं वैधर्म्यम् । **अथवा** द्रव्याश्रयत्वं साधर्म्यं, तद्विरुद्धं कर्मत्वं वैधर्म्यं, तदाश्रयत्वात्कर्मणां कर्म कार्य्यं न भवतीत्यर्थः ।

द्रव्याश्रयत्वाविशेषेऽपि यथा कारणगुणा रूपादयः कार्य्यगुण रूपादिकमारभन्ते न तथाऽवयवकर्माण्यवयविनि कर्मेति गुणसाधर्म्यात्प्राप्तं गुणवैधर्म्यात्प्रतिपिध्यते । तत्र पूर्वन्तावत्कारणसामान्यमाश्रित्य **"कर्म कर्मसाध्यं न विद्यत"** इत्युक्तम्, अत्र तु कार्य्यसामान्यमित्यपौनरुक्त्यमिति द्रष्टव्यम् ॥ २४ ॥

द्रव्याणा द्रव्यं कार्य्यमुक्त्वा गुणः कार्य्यमाह—

**"द्वित्वप्रभृतयः संख्याः पृथक्त्वसंयोगविभागाश्च ॥२५॥**

कार्य्यमित्यनुवर्तते । द्रव्याणामिति शेपः । द्वित्वप्रभृतयः संख्याः=द्वित्वादिकाः परार्द्धपर्य्यन्ताः संख्याः पृथक्त्वसंयोगविभागाश्च=द्विप्रभृतिपृथक्त्वानि संयोगश्च विभागश्च द्रव्याणां कार्य्यम्=अनेकद्रव्यसामान्यकार्य्यमित्यर्थः ।

द्रव्याणा सामान्यकार्य्यं गुणः संख्यादिरिति संख्यादीनामनेकद्रव्यकार्य्यत्वं साधर्म्यमिति भावः ॥ २५ ॥

**ननु** यथा द्वित्वप्रभृतय सख्याः पृथक्त्वसंयोगविभागाश्च द्रव्याणां सामान्यकार्य्यं, तथा कर्मापि तेषां सामान्यकार्य्यं किन्न स्यात्? तत्राह—

**"असमवायात्सामान्यकार्य्यं कर्म न विद्यते ॥ २६ ॥**

द्रव्याणामिति शेपः । असमवायात्=द्वयोर्वा वहुषु वा द्वित्वप्रभृतिसंख्यादिवत्कर्मणो व्यासज्यसमवायाभावात्कर्म द्रव्याणां सामान्यकार्य्यं न विद्यते=न भवतीत्यर्थः ।

यथा हि द्वित्वप्रभृतिसंख्यादयो गुणा द्रव्ययोर्द्रव्येषु वा व्यासज्य समवयन्ति, न तथा कर्म द्वयोर्वा वहुषु वा तेषु समवैति । तस्मात्संख्यादिवन्न तद्द्रव्याणा सामान्यकार्य्यं सभवतीति भावः ॥ २६ ॥

द्रव्याणां द्रव्यं सामान्यकार्य्यमुक्तम् । इदानीं गुणानां द्रव्यं सामान्य-कार्य्यमाह—

**"संयोगानां द्रव्यम् ॥ २७ ॥**

सामान्यकार्य्यमित्यनुवर्तते । सयोगानाम्=तन्तुप्रभृतिलक्षणावयव-संयोगानां द्रव्यं=पटादिकमवयविलक्षणं द्रव्यं सामान्यकार्य्यमित्यर्थः ।

यथाह्येकः संयोगः कारणं द्रव्यस्य, तथैव सर्वे संयोगा इति भवति सर्वेषां तेषां सामान्यकार्य्यं द्रव्यमिति भावः ॥ २७ ॥

गुणानां द्रव्यमेकं कार्य्यमुक्त्वा गुणमेकं कार्य्यमाह—

**"रूपाणां रूपम् ॥ २८ ॥**

सामान्यकार्य्यमित्यनुवर्तते । रूपाणां=तन्तुप्रभृतिगतानामवयवरूपाणां रूप=पटादिगतमवयविरूप सामान्यकार्य्यमित्यर्थः ।

**यथा** रूपाणां सामान्यकार्य्यं रूपं, तथा रसगन्धस्पर्शस्नेहसांसिद्धि-कद्रवत्वैकत्वैकपृथक्त्वपरिमाणवेगस्थित्तिस्थापकगुरुत्वानां सामान्यकार्य्यं रसादिक व्याख्यातं द्रष्टव्यम् ॥ २८ ॥

गुणाना गुणमेकं कार्य्यमभिधाय कर्मैकं कार्य्यमभिधत्ते—

**"गुरुत्वप्रयत्नसंयोगानामुत्क्षेपणम् ॥ २९ ॥**

सामान्यकार्य्यमित्यनुवर्तते । गुरुत्वप्रयत्नसंयोगानाम्=उत्क्षेप्योत्क्षेमृह-स्तगानां गुरुत्वप्रयत्नसंयोगानामुत्क्षपेणं=लोष्टाद्युत्क्षेप्यगतमुत्क्षेपणं कर्म सा-मान्यकार्य्यमित्यर्थः ।

एतेनावक्षेपणादिकं कर्म गुरुत्वादीनां सामान्यकार्य्यमित्यपि व्याख्यातं विज्ञेयम् । यथाहि गुरुणो लोष्टादेरात्मन. प्रयत्नेन हस्तसयोगेन चोत्क्षेप-णमुत्पद्यते, तथैवावक्षेपणादिकमितिगुरुत्वादीनां सामान्यकार्य्यमुत्क्षेपणादिकं कर्मेति भावः ॥ २९ ॥

गुणकार्य्यमुक्त्वा कर्मकार्य्यमाह—

**"संयोगविभागाश्च कर्मणाम् ॥ ३० ॥**

सामान्यकार्य्यमित्यनुवर्तते । चकारेण वेग समुच्चिनोति । सयोगवि-

भागाश्च=संयोगो विभागो वेगश्च कर्मणाम्=उत्क्षेपणादीनां कर्मणां सामान्यकार्य्यमित्यर्थः ॥ ३० ॥

ननु चेत्संयोगविभागादिकमेव कर्मकार्य्यं न द्रव्यकर्मणी, तदा "**संयोगविभागाश्च कर्मणां न द्रव्यकर्मणी**" इति कुतो न सूत्रितं ? तत्राह ।

"**कारणसामान्ये द्रव्यकर्मणां कर्माकारणमुक्तम्** ॥३१॥

कारणसामान्ये= कारणमुखेन सामान्याभिधानसमये द्रव्यकर्मणां=द्रव्यस्य कर्मणश्च कर्माकारणं=कारणं न भवतीत्युक्तं="**न द्रव्याणां कर्म**" "**कर्म कर्मसाध्यं न विद्यते**" इति सूत्राभ्यामुक्तमित्यर्थः ।

न पुनरिह तदाम्रेडनापेक्षेति भावः ॥ ३१ ॥

**मेयोद्देशो विभागोऽथ सामान्यश्च विशेषकम् ॥**
**अर्थस्य लक्षणश्चास्मिन्नाह्निके सम्प्रकीर्तितम् ॥ १ ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृतायां वैशेषिकसूत्रवैदिकवृत्तौ प्रथमाध्यायस्याद्यमाह्निकम् ।



# प्रथमोऽध्यायः ।

## द्वितीयमाह्निकम् ।

**ननु** यदेतत्कारणसामान्यं कार्य्यसामान्यञ्च द्रव्यगुणकर्मणामभिहितं, तत्कार्य्यकारणस्वरूपाज्ञाने न सुबोधम्, अतः कारणमिदं कार्य्यञ्चेदमिति येन सम्यगवसेयं, तद्वक्तव्यं, तत्राह—

**"कारणाभावात्कार्य्याभावः ॥ १ ॥**

सामग्र्यन्तरसत्त्वेऽपि यस्याभावान्नियमेन यस्याभावस्तत्तस्य कारणं, कार्य्यञ्चैतस्य तदित्यवसातव्यम् ? कुतः । यतः कारणाभावात्=कारणाभावादेव कार्य्याभावः=नियमेन कार्य्याभावो भवतीत्यर्थः ।

कारणसत्त्वे कार्य्यसत्त्वं, कारणाभावे च कार्य्याभाव इति ध्रुवो नियमः । तस्माद् यस्य भावाद्भावोऽभावाच्चाभावो भवेत्, तदेव नियतपूर्ववृत्तित्वात्कारणं यथाबीजं, तद्भावभावि तदभावाभावि चेतरत्कार्य्यं यथाऽङ्कुर इति निश्चेतव्यमिति भावः ॥ १ ॥

**ननु** कारणाभावाद् यथा कार्य्याभावस्तथा कार्य्याभावात्कारणाभावोऽपि सेत्स्यति, तथाच क्व ते नियमध्रौव्यं, तत्राह—

**"नतु कार्य्याभावात्कारणाभावः ॥ २ ॥**

कारणापेक्षया कार्य्यस्याल्पत्वेन कार्य्याभावात्कारणाभावो नतु=नैव भवतीत्यर्थः ।

व्यापकं हि कारणं, कार्य्यञ्च व्याप्यं, न च व्याप्याभावाद् व्यापकाभावो युज्यते, अतस्तदवस्थं तन्नियमध्रौव्यमिति भावः ।

**एतेनेदमप्युपदिष्टं भवति**—यन्मिथ्याज्ञाननिवृत्तौ सत्यामेव दोषादिनिवृत्त्या दुःखात्यन्तनिवृत्तिर्भवति, न दुःखात्यन्तनिवृत्तौ जन्मादिनिवृत्त्या मिथ्याज्ञाननिवृत्तिः । मिथ्याज्ञानस्य कारणत्वात् । दोषादेश्च कार्य्यत्वात् । तस्मान्मुमुक्षुभिः शिष्यैर्दुःखात्यन्तनिवृत्तिमुद्दिश्य मिथ्याज्ञाननिवृत्त्यर्थमेव यतनीयं, न दुःखात्यन्तनिवृत्त्यर्थम् । मिथ्याज्ञाननिवृत्तिश्चा-

स्मतत्त्वज्ञानात्, तच्च साधर्म्यवैधर्म्याभ्यां पदार्थतत्त्वज्ञानात्, तच्च सांख्यादिवद्वैशेषिकाच्छास्त्रान्नियमेन भवतीति सर्वथोपादेयमिदं वैदिकं वैशेषिकं शास्त्रमिति ॥ २ ॥

प्रथमोद्दिष्टानां द्रव्यगुणकर्मणां यथाक्रमं लक्षणमुक्तम् । तत्स्वरूपविवेकोपयुक्तं साधर्म्यं वैधर्म्यञ्च किञ्चिन्निरूपितम् । किं कारणं किञ्च कार्य्यमिति सम्यक्समाहितम् । इदानीमुद्देशक्रमप्राप्तस्य सामान्यपदार्थस्य लक्षणपरीक्षे प्रवर्तयिष्यन् तत्र बहुवादिविप्रतिपत्तिमुपलभमानः पूर्वन्तावत्तत्सद्भावे प्रमाणमाह—

**"सामान्यं विशेष इति बुद्ध्यपेक्षम् ॥ ३ ॥**

द्रव्यगुणकर्मणां समानो धर्मः=द्रव्यगुणकर्मवृत्तिभाव इति यावत्सामान्यम्, तेषामेवैकैकमात्रवृत्तित्वात्सामान्यविशेषो विशेषः, इति=इत्येतत्सामान्यद्वयं बुद्ध्यपेक्षम्=अनुवृत्ता व्यावृत्ता वा बुद्धिरपेक्षा=लक्षणं=प्रमाणं यस्मिन्, तत्तथेत्यर्थः ।

येयं मिथो भिन्नेषु द्रव्यगुणकर्मस्वभिन्ना बुद्धिः=द्रव्यं सद् गुणः सन् कर्म सदित्यादिलक्षणा समाना बुद्धि—अनुवृत्तबुद्धिरिति यावत्, न सा वस्तुभूतं निमित्तमन्तरेण संभवति, यदस्याः निमित्तं तदेव सामान्यम् । एवं यन्निमित्ता द्रव्यं गुणः कर्मेति प्रत्येकं विशेषबुद्धिः=व्यावृत्तबुद्धिरिति यावत्, साऽवान्तरविशेषापेक्षया सामान्यं सद्विशेष इत्यनुवृत्तबुद्ध्यपेक्षं सामान्यं व्यावृत्तबुद्ध्यपेक्षश्च विशेष इति भावः ।

**इदमत्र बोध्यम्** । यद्धि व्यवहारभूमौ नित्यं सदनेकासु व्यक्तिषु समवैति, तदेव वैशेषिकाणां सद्मनि सामान्यमिति गीयते । तच्च सामान्यविशेषभेदाद् द्विविधम् । भिन्नेष्वधिकरणेषु यत्समानां बुद्धिं प्रसूते येन च बहूनीतरेतरतो न व्यावर्तन्ते तत्सामान्यम् । यश्च केषाञ्चिदभेदं कुतश्चिद्भेदं कुरुते स सामान्यविशेषः । सोऽयं जातिरित्याख्यायते । तत्राद्यं द्रव्यगुणकर्मवृत्तितया महाविषयत्वात्परसामान्यं । द्वितीयश्च द्रव्यमात्रगुणमात्र—कर्ममात्रवृत्तितया तदपेक्षयाऽल्पविषयत्वादपरसामान्यमिति परि-

भाष्यते । परत्वं व्यापकत्वम् । अपरत्वं व्याप्यत्वम् । यदेतत्परसामान्यं तदेव सत्ता भाव इति नामभाक् । सा च द्रव्यगुणकर्मसु समवायसम्बन्धेन वर्त्तते, सामान्यविशेषसमवायेषु चैकार्थसमवायेन तस्याः प्रतीतिमात्रं, न परमार्थतस्तत्र तद्वृत्तिरिति सिद्धान्तः । अपरसामान्यञ्च द्रव्यगुणकर्मणामेकैकमात्रसमवेतं सत्ताव्याप्यं द्रव्यत्वं गुणत्व कर्मत्वमिति त्रयम् । तच्चैतत्सत्ताव्याप्यत्वादपरसामान्यं सत् पृथिवीत्वरूपत्वोत्क्षेपणत्वादिव्यापकत्वात्परसामान्यमपि सम्पद्यते । व्यापकत्वात्पराऽपि स्याद् व्याप्यत्वादपराऽपि चेत्यभ्युपगमात् । एवं पृथिवीत्वादावपि घटत्वाद्यपेक्षया परत्वं द्रव्यत्वाद्यपेक्षया चापरत्वमूहनीयम् । यथा च परसामान्यं सत्ता द्रव्यगुणकर्मस्वेव वर्त्तते न सामान्यविशेषसमवायेषु, तथाऽपरसामान्यमपि द्रव्यगुणकर्मस्वेव वर्त्तते न सामान्यादिषु । तत्रापि न व्योम्नि न काले न दिशि । तत्र सर्वत्र तद्बाधकस्य सद्भावात् । तत्सङ्ग्रहश्चोदयनाचार्य्येण किरणावल्यां दर्शितः ।

**"व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथाऽनवस्थितिः ।**
**रूपहानिरसम्बन्धो जातिबाधकसङ्ग्रहः ॥** इति ।

स्वाश्रयव्यक्तेरैक्यं व्यक्तेरभेदः, तेनाकाशत्वं कालत्वं दिक्त्वञ्च न जातिः, अनेकवृत्तित्वाभावात् । अन्यूनानतिरिक्तव्यक्तिकत्वं=स्वभिन्नजातिसमनियतत्वं तुल्यत्वं, तेन घटत्व कलशत्वञ्चोभयं न जातिः, किन्त्वेकम् । परस्परात्यन्ताभावसमानाधिकरणयोर्धर्मयोरेकत्र समावेशः सङ्करः, तेन भूतत्वं मूर्त्तत्वञ्च न जातिः, भूतत्वं विहाय मूर्त्तत्वं मनसि, मूर्त्तत्वं विहाय भूतत्वमाकाशे, पृथिव्यादौ च तदुभयोः समावेशः, तस्मान्नोभयं जातिः, किन्तूपाधिः । अनवस्थितिरनवस्था, तेन सामान्ये न सामान्यान्तरम् । स्वतो व्यावर्तकत्वात्मकरूपस्य हानी रूपहानिः, तेन विशेषपदार्थे विशेषत्वं न जातिः, तस्य स्वरूपतो व्यावर्तकत्वस्वीकारात् । जातिस्वीकारे तु स तयैव व्यावर्तकः स्यात्, न स्वरूपेण, सामान्याश्रयस्यार्थस्य सामान्यमुखेनैव व्यावर्तकत्वनियमात् । सम्बन्धाभावोऽसम्बन्धः, तेन समवायत्वं न जातिः । समवाये समवायान्तरानङ्गीकारात् । जातेश्च समवायेन वृत्तित्वनियमात् ।

नापि सामान्यादिषु वर्तमानाः सामान्यत्वादयोऽखण्डोपाधिः। तस्यापि जातिकल्पत्वात्, किन्तु सखण्डोपाधिः। उपाधिद्वैविध्यस्योरसिकरणात्। यस्तावन्न निर्वक्तुं शक्यते जातिवत् सोऽखण्डोपाधिः, यश्च तथा शक्यते स सखण्डोपाधिः। तत्र "नित्यत्वे सत्यनेकसमवेतत्वं सामान्यत्वम्, स्वपरव्यावर्तकस्वभावत्वं विशेषत्वम्, नित्यसम्बन्धत्वं समवायत्वम्, शब्दसमवायिकारणत्वमाकाशत्वम्, अतीतादिव्यवहारहेतुत्वं कालत्वम्, प्राच्यादिव्यवहारहेतुत्वं दिक्त्वमिति।

**तत्र** नामधेयेन पदार्थमात्रस्याभिधानमुद्देशः। विभागोऽप्युद्देश एव, तत्रापि पदार्थमात्राभिधानेनोद्देशलक्षणसत्त्वात्। उद्दिष्टस्य तत्त्वव्यवच्छेदकोऽसाधारणो धर्मो लक्षणम्। लक्षितस्य लक्षणमुपपद्यते न वेति प्रमाणैरवधारणं परीक्षा। पृथिव्यप्तेजोवायुमनांसि मूर्त्तानि। क्रियाश्रयत्वं मूर्त्तत्वम्। क्षितिजलज्योतिरनिलान्तरिक्षाणि पञ्च भूतानि। बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वं भूतत्त्वमिति विवेकः।

**यद्वा** द्रव्यगुणकर्मलक्षणानन्तरमुद्देशक्रमप्राप्तं सामान्यपदार्थं लक्षणपरीक्षाभ्यामवधारयिष्यन् पूर्वन्तावत्परिभाषासूत्रमाह। "**सामान्यं विशेष इति बुद्ध्यपेक्षम्**" यत्सामान्यं सामान्यविशेष इति=इत्येतदभिधानं, तदेकस्मिन्नेव द्रव्यगुणकर्मणां भावभूते सामान्यपदार्थे बुद्ध्यपेक्षम्=अनुवृत्तव्यावृत्तबुद्ध्यपेक्षं मन्तव्यमित्यर्थः। समानानां द्रव्यगुणकर्मणां भावेषु तावत्सामान्यमिति व्यपदेशो भवति, तत्राप्यनुवृत्तबुद्ध्यपेक्षया सामान्यं व्यावृत्तबुद्ध्यपेक्षया च सामान्यविशेष इति व्यपदेशो मन्तव्य इति भावः॥ ३॥

**ननु** यदेतद्बुद्धिप्रमाणकं सामान्यतद्विशेषभेदभिन्नं सामान्यमभिहितं, तत्समानानां द्रव्यगुणकर्मणामनागन्तुको धर्मो वक्तव्यः स च नानाविधः, तत्र कोऽसौ धर्मः सामान्यमेव भवति न सामान्यविशेष इति वक्तव्यं, तत्राह।

**"भावोऽनुवृत्तेरेव हेतुत्वात्सामान्यमेव॥ ४॥**

भावः=सत्ताख्यं परसामान्यमनुवृत्तेरेव=व्यावृत्तिव्यवच्छेदार्यैवकारः, अनुवृत्तबुद्धेरेव हेतुत्वात्=कारणत्वात्सामान्यमेव=विशेषव्यावृत्त्यर्थमेवकारः सामान्यसंज्ञकमेव भवति, न कदापि विशेषाख्यां लभत इत्यर्थः ॥ ४ ।

**ननु** केषान्तर्हि सामान्यानां सतां विशेषसंज्ञा? तत्राह ।

**"द्रव्यत्वं गुणत्वं कर्मत्वञ्च सामान्यानि विशेषाश्च॥५॥**

द्रव्यत्वं गुणत्वं कर्मत्वञ्चेत्यत्र समासाभावो मिथो व्याप्यव्यापकभावाभावसूचनार्थः, चस्तु पृथिवीत्वरूपत्वोत्क्षेपणत्वादीनां द्रव्यत्वादिव्याप्यापरसामन्यानां समुच्चायकः, तथाच द्रव्यत्वगुणत्वकर्मत्वादीनि सामान्यानि=सामान्यानि सन्ति विशेषाश्च=विशेषसंज्ञकान्यपि भवन्तीत्यर्थः ।

**तत्र** सत्तापेक्षया न्यूनदेशवृत्तित्वाद् द्रव्यत्वादीनां विशेषत्वम्=अपरत्वम् । स्वव्याप्यपृथिवीत्वाद्यपेक्षया चाधिकदेशवृत्तित्वात्सामान्यत्वं=परत्वम् । एवं पृथिवीत्वादीनामपि द्रव्यत्वाद्यपेक्षयाऽपरत्वं घटत्वाद्यपेक्षया च परत्वमिति विवेकः ॥ ५ ॥

**ननु** किं द्रव्यादीनां सर्वे भावाः सामान्यानि विशेषाश्चेति सार्वत्रिको नियमः? तत्राह ।

**"अन्यत्रान्त्येभ्यो विशेषेभ्यः ॥ ६ ॥**

सामान्यानि विशेषाश्चेत्यनुवर्तते, अन्त्येभ्यः=अन्ते=अन्तिमावयविनि भवा अन्त्यास्तेभ्यो विशेषेभ्यः=घटत्वपटत्वादिविशेषेभ्योऽन्यत्र=द्रव्यत्वादिषु सामान्यानि विशेषाश्चेति नियम इत्यर्थः ।

**यथा** घटत्वपटत्वादयोऽन्त्या विशेषा विशेषा एव भवन्ति न सामान्यानि, तथान्त्यं सत्तासामान्यमपि सामान्यमेव भवति न विशेष इति न विस्मर्तव्यम् ।

**अथवा** सामान्यानि विशेषाश्चेत्युपश्रुत्य विशेषपदार्थे सन्दिहानं प्रत्याह—**"अन्यत्रान्त्येभ्यो विशेषेभ्यः"** अन्त्येभ्यः=अन्तेअवसाने भवन्तीत्यन्त्याः, येभ्योऽपरे विशेषा न सन्तीत्युदयनाचार्य्यैः, अन्ते=उत्पादविनाशयोरवसाने भवन्तीत्यन्त्याः=नित्यद्रव्याणि, तेषु भवा अन्त्या

इति वृत्तिकृतः, तेभ्यो विशेषेभ्यः=विशेषपदार्थेभ्योऽन्यत्र=सामान्यपदार्थे सामान्यं विशेषइति संज्ञा नतु विशेषपदार्थे इत्यर्थः। अन्त्येषु भवत्वादन्त्याः, स्वाश्रयविशेषकत्वाच्च विशेषाः। ते चात्यन्तव्यावृत्तिहेतुत्वाद् विशेषा एव, प्रतिनित्यद्रव्यमेकत्वाच्चानन्ता इति निश्चेतव्यम् ॥ ६ ॥

**ननु** सत्तायाः किं लक्षणं? तत्राह—

**"सदिति यतो द्रव्यगुणकर्मसु सा सत्ता ॥ ७ ॥**

यतः=यन्निमित्तको द्रव्यगुणकर्मसु=द्रव्येषु गुणेषु कर्मसु च सदिति=सद् द्रव्यं सन् गुणः सत् कर्मेत्याकारकः प्रत्ययः शब्दप्रयोगो वा भवति, सा सत्तेत्यर्थः ॥ ७ ॥

**ननु** द्रव्यगुणकर्मस्वरूपैव सत्ता, न ततोऽर्थान्तरं भवितुमर्हति सदिति व्यवहारस्य स्वरूपेणाप्युपपत्तेस्तत्राह—

**"द्रव्यगुणकर्मभ्योऽर्थान्तरं सत्ता ॥ ८ ॥**

अनुवृत्त्या सत्तापदलाभेऽपि पुनस्तद्ग्रहणं विस्पष्टप्रतिपत्त्यर्थम्। द्रव्यगुणकर्मभ्यः=द्रव्येभ्यो गुणेभ्यः कर्मभ्यश्चार्थान्तरम्=अन्यः पदार्थः सत्ता=सत्ताख्यं परसामान्यमित्यर्थः।

द्रव्यगुणकर्मस्वरूपस्याननुगतत्वेनानुगतव्यवहाराप्रयोजकत्वादिति भावः ॥ ८ ॥

अर्थान्तरत्वमेवोपपादयति—

**"गुणकर्मसु च भावान्न कर्म न गुणः ॥ ९ ॥**

पूर्वसूत्रमनुवर्तते। गुणकर्मसु च=गुणेषु कर्मसु च भावात्=वर्तमानत्वान्न कर्म न गुणो न द्रव्यमित्यपि द्रष्टव्यं, किन्तु द्रव्यगुणकर्मभ्योऽर्थान्तरमित्यर्थः।

चेत्सत्ता द्रव्यगुणकर्मरूपा भवेत्, तदा गुणकर्मसु न वर्तेत, द्रव्यगुणकर्मणां गुणकर्मसु वृत्तित्वासिद्धेः। सत्ता च गुणकर्मसु वर्तते। तस्मात्तेभ्यः पदार्थान्तरमिति भावः ॥ ९ ॥

अर्थान्तरत्वे हेत्वन्तरमाह—

**"सामान्यविशेषाभावेन च ॥ १० ॥**

द्रव्यगुणकर्मभ्योऽर्थान्तरं सत्तेत्यनुवर्तते । पूर्वोक्ता द्रव्यत्वादयः सामान्यविशेषास्तदभावेन च=तदभाववत्त्वेनापि हेतुना द्रव्यगुणकर्मभ्योऽर्थान्तरं सत्तेत्यर्थः ।

चेत्सत्ता द्रव्यगुणकर्मभ्योऽर्थान्तरं न स्यात् तदाऽवश्यं द्रव्यादिवत् सामान्यविशेषवती स्यात् । न च द्रव्यत्वादयः सामान्यविशेषाः सत्तायां वर्तन्ते । तस्माद् द्रव्याद्यात्मिका सत्ता न, किन्तु पदार्थान्तरमिति भावः ॥ १० ॥

द्रव्यगुणकर्मभ्योऽर्थान्तरं सत्तेति प्रमाणैरवधारितम् । इदानीमपरसामान्यं द्रव्यत्वं तेभ्योऽर्थान्तरं प्रमाणैरवधारयति—

**"अनेकद्रव्यवत्त्वेन द्रव्यत्वमुक्तम् ॥ ११ ॥**

द्रव्यगुणकर्मभ्योऽर्थान्तरमित्यनुवर्तते । अनेकद्रव्यवत्त्वेन=अनेकम्=अखिलं द्रव्यं समवायितयाऽस्ति यस्य, तदनेकद्रव्यवत्, तस्य भावस्तत्त्वं तेन=सर्वद्रव्येषु समवेतत्वेन हेतुना द्रव्यत्वं=सत्ताव्याप्यमपरसामान्यं द्रव्यत्वमुक्तं=सत्तावद् द्रव्यगुणकर्मभ्योऽर्थान्तरं व्याख्यातमित्यर्थः ।

द्रव्यगुणकर्मणां तथात्वाभावादिति भावः ॥ ११ ॥

हेत्वन्तरमाह—

**"सामान्यविशेषाभावेन च ॥ १२ ॥**

सामान्यविशेषाः द्रव्यत्वादयस्तदभाववत्वेनापि हेतुना सत्तावद् द्रव्यगुणकर्मभ्योऽर्थान्तरं द्रव्यत्वमित्यर्थः ।

चेत्तथा न स्यात्, तदा द्रव्यादिवत्सामान्यविशेषवत्त्वेनोपलभ्येत, नोपलभ्यते, तस्मान्न तदात्मकं तदिति भावः ॥ १२ ॥

द्रव्यत्वमुक्त्वा गुणत्वमिदानीमर्थान्तरमाह—

**"गुणेषु भावाद् गुणत्वमुक्तम् ॥ १३ ॥**

द्रव्यगुणकर्मभ्योऽर्थान्तरमित्यनुवर्तते । गुणेषु=रूपादिषु गुणेषु भा-

वात्=समवेतत्वाद् गुणत्वं=सत्ताव्याप्यमपरसामान्यं गुणत्वमुक्तं=सत्तावद् द्रव्यगुणकर्मभ्योऽर्थान्तरं व्याख्यातमित्यर्थः ॥ १३ ॥

हेत्वन्तरमाह—

**"सामान्यविशेषाभावेन च ॥ १४ ॥**

पूर्ववद् व्याख्येयम् ॥ १४ ॥

कर्मत्वमाह—

**"कर्मसु भावात्कर्मत्वमुक्तम् ॥ १५ ॥**

द्रव्यगुणकर्मभ्योऽर्थान्तरमित्यनुवर्तते । कर्मसु भावात्कर्मत्वमुक्तं=द्रव्यगुणकर्मभ्योऽर्थान्तरं व्याख्यातमित्यर्थः ॥ १५ ॥

हेत्वन्तरमाह—

**"सामान्यविशेषाभावेन च ॥ १६ ॥**

पूर्ववद् व्याख्येयम् ॥ १६ ॥

अर्थान्तरत्वं साधयित्वा सत्तैकत्वं साधयति—

**"सदिति लिङ्गाविशेषाद् विशेषलिङ्गाभावाच्चैको भावः ॥ १७ ॥**

सदिति लिङ्गाविशेषात्=सद् द्रव्यं सन् गुणः सत्कर्मेत्याकारकव्यवहारात्मकस्य सत्तानुमापकलिङ्गस्याविशेषात्=विशेषो भेदस्तदभावाद्=द्रव्यगुणकर्मसु समानत्वेनोपलम्भात् विशेषलिङ्गाभावाच्च=सत्ताभेदो विशेषस्तत्र लिङ्गस्याभावोऽनुपलम्भस्तस्माच्चैको भावः=एकमेव सत्तासामान्यं नावच्छेदकभेदभिन्नमित्यर्थः ।

चेदवच्छेदकभेदेन सत्तासामान्यं भिद्येत । तदा तैस्तुल्यव्यक्तिकतया सत्तासामान्यं वा न स्यात्, तानि वा न स्युः, अतो नावच्छेदकभेदात्तद्भेदः, किन्तु सदिति लिङ्गाविशेषाद्विशेषलिङ्गाभावाच्चैकं सत्तासामान्यमिति भावः ।

यथावच्छेदकभेदान्न सत्ताभेदः, तथा द्रव्यत्वादीनामपि तद्भेदान्न भेद इत्यपि द्रष्टव्यम् ॥ १७ ॥

कार्य्यकारणयोर्ज्ञानं सामान्यार्थस्य लक्षणम् ।
परीक्षणञ्च संक्षेपाद् द्वितीयेऽस्मिन् प्रदर्शितम् ॥ १ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृतायां वैशेषिकसूत्रवैदिकवृत्तौ प्रथमाध्यायस्य द्वितीयमाह्निकम् ।

समाप्तश्चायं समवेताशेषपदार्थाध्यायः प्रथमः ।



# द्वितीयोऽध्यायः ।

## आद्यमाह्निकम् ।

अथ शिष्यजिज्ञासामनुरुध्य यथोद्देशक्रमं द्रव्याणि लिलक्षयिषुराचार्य्यः पूर्वन्तावत्पृथिवीं लक्षयति—

**"रूपरसगन्धस्पर्शवती पृथिवी ॥ १ ॥**

नील-शुक्ल-लोहित-पीत-हरित-कपिश-चित्रभेदात्सप्तविधं रूपम्, मधुराम्ल-लवण-कटु-कषाय-तिक्तभेदात् षड्विधो रसः, सुरभिरसुरभिश्च गन्धः, पाकजोऽनुष्णाशीतः स्पर्शः, इत्येते समवायेन विद्यन्ते यस्याः सा पृथिवीत्यर्थः ।

मतुपो द्वन्द्वान्ते श्रूयमाणत्वात्प्रत्येकमन्वयः । तेन चत्वारि लक्षणानीति शंकरमिश्रः ।

तत्र कृष्णं रूपं पृथिव्याः स्वाभाविकं **"यत्कृष्णं तदन्नस्य"** छा० ६—४—१ इति छन्दोगानामाम्नानाद् । निमित्तव्यपाश्रयं चान्यत् । तथा । गन्धो नाम पृथिव्या नैजो गुणः । कारणक्रमाच्च रूपादयः । शब्दस्त्वनभिव्यक्तः सन्नपि नोक्त इति विवेकः ॥ १ ॥

अपां लक्षणमाह ।

**"रूपरसस्पर्शवत्य आपो द्रवाः स्निग्धाः ॥ २ ॥**

याः द्रवाः=सांसिद्धिकद्रवत्ववत्यः स्निग्धाः=स्नेहवत्यः, तथा रूपरसस्पर्शवत्यः=शुक्लं रूपं, मधुरो रसः, शीतः स्पर्शः, इत्येते सन्ति यासां, ता आप इत्यर्थः ।

तत्र शुक्लं रूपमपां स्वाभाविकं, निमित्तव्यपाश्रयमन्यत् । **"यच्छुक्लं तदपाम्"** छा० ६—४—१ इति छान्दोग्यश्रुतेः । तथा रसद्रवत्वस्नेहा नैजा गुणाः । कारणक्रमाच्च रूपस्पर्शौ । द्रवत्वस्नेहौ च रसवत्कारणक्रमेणान्यत्र तदारम्भकौ न भवत इति पृथगुक्तौ । सेयमननुयोज्या वस्तुशक्तिः । शब्दस्त्वनभिव्यक्तः सन्नपि नोक्त इति विवेकः ॥ २ ॥

तेजोलक्षणमाह ।

**"तेजोरूपस्पर्शवत् ॥ ३ ॥**

भास्वरशुक्लं रूपमिति नवीनाः । लोहितं रूपमिति वैदिकाः । **"यदग्ने रोहितं रूपं तेजसस्तद्रूपम्"** छा० ६-४-१ इति छान्दोग्ये श्रवणात् । उष्णः स्पर्शः इत्येतौ द्वौ स्तो यस्य तत्तेज इत्यर्थः ।

तत्र रूपं तेजसो नैजो गुणः । कारणक्रमादपरः । शब्दस्त्वनभिव्यक्तः सन्नपि नोक्त इति विवेकः ॥ ३ ॥

वायुं लक्षयति

**"स्पर्शवान् वायुः ॥ ४ ॥**

अपाकजोऽनुष्णाशीतः स्पर्शोऽस्ति यस्य, स वायुरित्यर्थः ।

तत्रानुष्णाशीतो विलक्षणः स्पर्शो वायोर्नैजो गुणः । अन्यव्यपाश्रयः शीतादिः । शब्दस्तु कारणक्रमादुत्पन्नोऽपि नाभिव्यज्यत इति नोक्त इति विवेकः ॥ ४ ॥

नन्वाकाशस्यापि रूपरसगन्धस्पर्शानामन्यतमगुणवत्त्वं लक्षणं वक्तव्यं भूतत्वाविशेषात् रूपोपलम्भाच्च । तत्राह—

**"त आकाशे न विद्यन्ते ॥ ५ ॥**

ते=रूपरसगन्धस्पर्शाश्चत्वारो गुणाः आकाशे=व्योम्नि न विद्यन्ते=न वर्तन्ते इत्यर्थः ।

तेजःप्रभृतीनां हि रूपादयो नैजा गुणाः । न च ते कथञ्चिदाकाशमधिकर्तुं पारयन्ते । येन लक्षणतामापद्येरन् । तत्र तत्प्रतीतिस्त्वन्यव्यपाश्रयान्न स्वभावादिति भावः ॥ ५ ॥

नन्वापो द्रवा इत्युक्तमयुक्तं, सर्पिरादावपि द्रवत्वोपलब्धेस्तत्राह—

**"सर्पिर्जतुमधूच्छिष्टानामग्निसंयोगाद् द्रवत्वमद्भिः सामान्यम् ॥ ६ ॥**

सर्पिर्जतुमधूच्छिष्टानां=घृतलाक्षासिक्थकानामग्निसंयोगात्=औष्ण्यप्रक-

षवत्तेजःसम्बन्धाद् द्रवत्वम्=उत्पद्यमानं द्रवत्वमद्भिः=पयसा सामान्यं=समानो धर्म इत्यर्थः।

सर्पिर्जतुमधूच्छिष्टानामग्निसंयोगाद् यद् द्रवत्वमुत्पद्यते, तद् यद्यपि जलद्रवत्वेन समानं, तथापि न सांसिद्धिकम्, अपि च नैमित्तिकम्। सांसिद्धिकञ्च लक्षणम्। अतो नातिप्रसङ्ग इति भावः॥ ६॥

**ननु** त्रपुसीसलोहरजतसुवर्णेषु द्रवत्वोपलब्धेस्तदवस्थोऽतिप्रसङ्गस्तत्राह—

**"त्रपुसीसलोहरजतसुवर्णानामग्निसंयोगाद् द्रवत्वमद्भिः सामान्यम्॥ ७॥**

त्रपुसीसलोहरजतसुवर्णानाम्=अत्रानुक्ताः कांस्यताम्रपित्तलपारदादयोऽपि द्रष्टव्याः। रङ्गसीसकायःकलधौतकाञ्चनादीनामग्निसंयोगात्=वह्निसंबन्धाद् द्रवत्वम्=उत्पद्यमानं द्रवत्वमद्भिः=पयसा सामान्यं=समानो धर्म इत्यर्थः।

त्रप्वादीनामग्निसंयोगाद् यद् द्रवत्वमुत्पद्यते, तद् यद्यपि जलद्रवत्वेन समानं, तथापि न सांसिद्धिकम्, अपिच नैमित्तिकम्। सांसिद्धिकं च लक्षणम्। अतो नातिप्रसङ्ग इति भावः।

तत्र सर्पिरादिकं पार्थिवं, त्रप्वादिकं च तेजोंऽशबाहुल्यात्तैजसमिति वैशेषिकाचार्य्याः। उभयमपि पार्थिवमिति प्रत्यग्रा इति विवेकः॥ ७॥

**ननु** स्पर्शवान् वायुरिति वायुलक्षणं न युज्यते, लक्ष्यस्य वायोरेवासिद्धेरित्याशंक्य सामान्यतो दृष्टेनादृष्टलिङ्गेन तत्सिद्ध्यै पूर्वन्तावद् दृष्टं लिङ्गमुदाहरति—

**"विषाणी ककुद्मान् प्रान्तेबालधीः सास्नावान् इति गोत्वे दृष्टं लिङ्गम्॥ ८॥**

विषाणी=महिषमेषादिशृङ्गतो विजातीयं शृङ्गं विषाणं, तदस्ति यस्य स तथा, वृषस्कन्धपृष्ठस्थो मांसपिण्डः ककुत्, तदस्ति यस्य स ककुद्मान्। प्रान्तेबालधिः=अन्ते=अवसाने बालाः=लोमानि धीयन्ते आधीयन्ते

यस्मिन् तद् अन्तेबालधि=पुच्छं । कण्ठेकाल इत्यादिवत्सप्तम्या अलुक् । महिषादिपुच्छस्य प्रलम्बत्वाभावाद् अश्वमेषादिपुच्छस्य च कात्स्न्र्येन बालमयत्वात्ततः प्रकृष्टं=विलक्षणजातीयमन्तेबालधि विद्यते यस्य, स प्रान्तेबालधिः । गलकम्बलं सास्ना, सा विद्यते यस्य, स सास्नावान्, इति=पूर्वोक्तं विषाणित्वं ककुद्मत्त्वं प्रान्तेबालधित्वं सास्नावत्त्वमित्येतच्चतुष्टयं यथा गोत्वे=गोत्वानुमितौ दृष्टं लिङ्गं=दृष्टस्वसाध्याविनाभावसम्बन्धं=दृष्टविशेषव्याप्तिकं लिङ्गं=हेतुरित्यर्थः ।

अत्र "गोत्वे दृष्टं लिङ्गमि"ति वचनात् सामान्यविशेषविषयं प्रत्यक्षं, सामान्यविषयमनुमानमिति सिद्धान्तो निश्चेतव्यः । यत्र धूमस्तत्राग्निरित्यादौ सर्वत्र सामान्ययोरेव व्याप्तिग्रहणेन तद्विषयत्वस्यैवौचित्यात् । एतेन शब्दोऽपि सामान्यविषयो व्याख्यातः । सोऽपि सामान्यमुख्येनैव विशेषेण कृतसङ्केतो न केवलविशेषेण । आनन्त्याद् व्यभिचाराच्च ॥ ८ ॥

उदाहरणमुक्त्वौदाहरणिकमाह—

**"स्पर्शश्च वायोः ॥ ९ ॥**

लिङ्गमित्यनुवर्तते । तथेति शेषः । चकारेण शब्दधृतिकम्पाः समुच्चीयन्ते । तथा स्पर्शः=उपलभ्यमानोऽयं विलक्षणः स्पर्शो वायोः=स्वाश्रयतया वाय्वनुमितौ लिङ्गं=हेतुरित्यर्थः ।

विषाणादिकं दृष्टं लिङ्गम् । अयं चादृष्टं लिङ्गमिति विशेषः । लिङ्गमात्रे चैतदुदाहरणम् । तत्र यथा चैतददृष्टं लिङ्ग, तथाग्रे पञ्चदशसूत्रे सुव्यक्तमिति बोध्यम् ॥ ९ ॥

ननु भूवारिज्योतिषामेवायं स्पर्शो न वायोः । तत्राह—

**"न च दृष्टानां स्पर्श इत्यदृष्टलिङ्गो वायुः ॥ १० ॥**

स्पर्शः=उपलभ्यमानोऽयं स्पर्शो दृष्टाना=दृष्टिविषयाणां पृथिव्यप्तेजसां न च=नैव भवितुमर्हति, विलक्षणत्वात्, इति=अतोऽदृष्टलिङ्गः=न दृष्ट=प्रत्यक्षेण गृहीत. स्वसाध्येनाविनाभावसम्बन्धो यस्य स्पर्शस्य, सोऽदृष्ट=अदृष्टविशेषव्याप्तिक इति यावत्, स च लिङ्ग=स्वाश्रयतयाऽनुमापक यस्य, स तथा वायु=समीरण इत्यर्थः ॥ १० ॥

**ननु** स्पर्शेन लिङ्गेन वायुः कश्चित् सिध्यति न द्रव्यं, तत्राह—

"**अद्रव्यवत्त्वेन द्रव्यम्** ॥ ११ ॥

वायुरित्यनुवर्तते । अद्रव्यवत्त्वेन=द्रव्यं यन्न भवति तद् अद्रव्यं=गुणो वा कर्म वा सामान्यं वा, प्रकृतत्वादत्र स्पर्शः, तदाश्रयत्वेन वायुर्द्रव्यमित्यर्थः ।

अत्र वायुर्द्रव्यं समवायेनाद्रव्याश्रयत्वाद् घटवदिति प्रयोगाकारो बोद्धव्यः ॥ ११ ॥

**ननु** समवायेनाद्रव्यवत्त्वं द्रव्यं व्यभिचरति, द्रव्यत्वाभाववति गुणे कर्मणि विपक्षेऽपि सत्त्वात्, तत्राह—

"**क्रियावत्त्वाद्गुणवत्त्वाच्च** ॥ १२ ॥

वायुर्द्रव्यमित्यनुवर्तते । स्पष्टार्थं सूत्रम् । तथा च न कुत्रापि व्यभिचार इति भावः ॥ १२ ॥

**ननु** क्रियावन्ति गुणवन्ति च पृथिव्यप्तेजांसि न व्यवहारभूमौ नित्यानि, वायुरपि क्रियावान् गुणवाँश्च, तत्कथमस्य व्यवहारभूमौ नित्यत्वमुच्यते, तत्राह—

"**अद्रव्यत्वेन नित्यत्वमुक्तम्** ॥ १३ ॥

वायोरित्यग्रिमसूत्रादाकृष्यते । अद्रव्यत्वेन=न विद्यतेऽवान्तरसर्गेषूत्पत्तिकारणं द्रव्यं यस्य सोऽद्रव्यः, तस्य भावस्तत्त्वं, तेन=आ महाप्रलयमवस्थानादवान्तरसर्गेषूत्पत्तिकारणद्रव्याभाववत्त्वेन वायोर्नित्यत्वं=व्यवहारभूमौ नित्यत्वमुक्तम्=अभिहितमित्यर्थः ।

महाप्रलये विनश्यन्नपि वायुरवान्तरसर्गप्रलयेषु न विनश्यति, तेन सर्गादौ प्रकृतेः सकाशादुत्पन्नोऽपि नावान्तरसर्गेषु पृथिव्यादिवत्पुनरुत्पद्यते तावतैव चास्य नित्यत्वमुक्तं न परमार्थतो नित्यत्वमिति भावः ॥ १३ ॥

**ननु** व्यवहारभूमौ नित्यश्चेद्वायुस्तर्हि नाना न स्यात्, खादीनामतथात्वात्, नाना चेत्तन्नानात्वे किं लिङ्गं? तत्राह ।

"**वायोर्वायुसम्मूर्च्छनं नानात्वे लिङ्गम्** ॥ १४ ॥

वायुसम्मूर्च्छनं=समानवेगयोर्विरुद्धदिक्क्रिययोर्वाय्वोस्तथाभूतानां वा वायूनां सन्निपातः तृणतूलकाद्यूर्ध्वगमनानुमेयो लोके वातूल इति प्रख्यातो वायोः=अनिलस्य नानात्वे=नानाभावे लिङ्गं=हेतुरित्यर्थः ।

यदिदं वायुप्रेरितानां तृणादीनामूर्ध्वगमनमुपलभ्यते, न च तद् वायुसम्मूर्च्छनमन्तरेणोपपद्यते । लोके विरुद्धदिक्क्रिययोर्नदीस्रोतसोः सम्मूर्च्छनेनैव पयसां तत्संसृष्टानां च तृणादीनामूर्ध्वगमनस्य दृष्टत्वात्, सम्मूर्च्छनं च सन्निपातो वायूनामिति भवति तन्नानात्वे लिङ्गमिति भावः ।

तत्र यस्तावद् वायुराशिरभितः पृथिवीं वर्तते, येनायं लोकः प्राणिति, स च स्पृष्टोऽपि सर्वकालमल्पत्वान्नोपलभ्यते, तदपरश्च प्रत्यासन्नः सर्वः सर्वैरुपलभ्यत इति विशेषः ॥ १४ ॥

**ननु** स्पर्शस्य दृष्टत्वात्कथमुक्तमदृष्टलिङ्गो वायुरित्याशंक्य स्पर्शस्य दृष्टत्वेऽपि तस्यादृष्टलिङ्गत्वं व्यक्तीकरोति—

**"वायुसन्निकर्षे प्रत्यक्षाभावाद् दृष्टं लिङ्गं न विद्यते ॥१५॥**

वायुसन्निकर्षे=वायुना स्पर्शेन्द्रियसंप्रयोगे प्रत्यक्षाभावात्=स्पर्शस्य प्रत्यक्षत्वेऽपि वायुप्रत्यक्षाभावात् लिङ्गं=स्पर्शाख्यं लिङ्गं दृष्टं=दृष्टविशेषव्याप्तिकं न विद्यते=न भवतीत्यर्थः ।

लिङ्गलिङ्गिनोरुभयोर्दृष्टत्वं हि गोत्वविषाणित्वयोरिव लिङ्गस्य दृष्टत्वे प्रयोजकम् । यत्र तु लिङ्गि न दृष्टं, तत्र स्वरूपतो दृष्टमपि लिङ्गमदृष्टमेव भवति न दृष्टम् । अदृष्टस्वसाध्याविनाभावसंबन्धत्वेन दृष्टविशेषव्याप्तिकत्वाभावादिति भावः ॥ १५ ॥

**ननु** सम्बन्धस्य दृष्टत्वाभावे कथं स्पर्शादिना लिङ्गेन वायुसिद्धिरित्याशंक्य तत्सिद्धिप्रकारमाह—

**"सामान्यतो दृष्टाच्चाविशेषः ॥ १६ ॥**

यद्यपि "यत्र विषाणित्वं तत्र गोत्वं, यत्र वा धूमस्तत्राग्निरित्यादिवत् यत्रेदृग् विलक्षणः स्पर्शस्तत्र वायुत्वमिति न दृष्ट । तथापि यत्र क्रियात्वं तत्र सकरणकत्वमित्यादिवत् यत्र गुणस्तत्र द्रव्यत्वमिति सामान्यतो दृष्टमेव।

तथा च सामान्यतो दृष्टाच्च=सामान्यतो दृष्टव्याप्तिकाच्च स्पर्शादिलिङ्गाद्-विशेषः=वायुत्वविशेषरहितः सामान्यतोऽदृष्टद्रव्यव्यतिरिक्त उपलभ्यमानविजातीयस्पर्शाश्रयः कश्चिद् द्रव्यभेदः सिध्यति। स एव वायुरित्यर्थः।

**तत्र** रूपादयो गुणा द्रव्यमाश्रयन्तो दृष्टाः, स्पर्शोऽपि गुणः, तेनापि द्रव्यमाश्रयितव्यं, यत्तदाश्रयभूतं द्रव्यं, स वायुः। भेरीशब्दसन्तानो द्रव्याभिघातजन्यो दृष्टः, पर्णादिशब्दसन्तानोऽपि शब्दः, तेनाप्यसति रूपवद्द्रव्याभिघाते स्पर्शवद्वेगवद्द्रव्याभिघातजन्येन भवितव्यं, यत्तत्र स्पर्शवद्वेगवद्द्रव्यं, स वायुः। या याऽसदाद्यनधिष्ठितद्रव्यधृतिः, सा सर्वा स्पर्शवद्वेगवद्द्रव्यसंयोगहेतुका दृष्टा, यथा नौकाधृतिः, नभसि तृणतूलस्तनयित्नुविमानादीनां धृतिरपि धृतिः, तयाऽपि स्पर्शवद्वेगवद्द्रव्यहेतुकया भवितव्यं, यत्तत्र स्पर्शवद्वेगवद्द्रव्यं, स वायुः। काशादिकम्पो नदीपूराभिघातजन्यो दृष्टः। वृक्षादिकम्पोऽपि कम्पः, तेनाप्यसति रूपवद्द्रव्याभिघाते स्पर्शवद्वेगवद्द्रव्याभिघातजन्येन भवितव्यं, यत्तत्र स्पर्शवद्वेगवद्द्रव्यं स वायुरिति तत्साधकानुमानप्रकारः॥ १६॥

**ननु** सामान्यतोदृष्टलिङ्गाददृष्टद्रव्यातिरिक्तः कश्चिद् विजातीयस्पर्शाश्रयो द्रव्यभेदः सिध्यतु, तस्य वायुरिति नाम कुतः सिद्धं? तत्राह—

**"तस्मादागमिकम्॥ १७॥**

तस्मात्=यस्मात्सामान्यतो दृष्टलिङ्गाद् द्रव्यसामान्यतया वायुः सिध्यति न विशेषतया, तस्मात्तस्य वायुरिति विशेषतो नामागमिकम्=आगमादस्तत्सिद्धं वेदितव्यमित्यर्थः।

सामान्यतो दृष्टात्सामान्येन प्रतिपन्नस्य वायोः **"प्राणाद्वायुरजायत"** यजुः अ ३१ मन्त्र १२ इत्याद्यागमेभ्यो विशेषतः प्रतिपत्तिरिति भावः॥ १७॥

नन्वागमानामीश्वरप्रणीतत्वे लिङ्गानुपलब्धेस्तत्प्रयुक्तप्रामाण्यासंभवात् तत्सिद्धा संज्ञाऽपि कथं प्रामाणिकी स्यात्। तत्राह—

**"संज्ञाकर्म त्वस्मद्विशिष्टानां लिङ्गम्॥ १८॥**

संज्ञाकर्म तु=संज्ञायाः कर्मणश्च समानप्रवर्तकत्वसूचनाय समाहारद्वन्द्वादेकवद्भावः, लिङ्गाभावविच्छित्त्यै तुः, इयमस्य संज्ञा, संज्ञाचास्येयम्, इदमिष्टं कर्म वर्णाश्रमिभिरनुष्ठेयम्, इदञ्चानिष्टं कर्म परिहेयमित्येवं वेदोक्तं नाम च कर्म चैतदुभयमसद्विशिष्टानाम्=असच्छब्दप्रयोगेण मनुष्यातिरिक्ताधिकारं प्रतिक्षिपति, **यद्वा** मनुष्यमात्राधिकारं सम्पादयति, मनुष्यमात्रशिरोधार्य्याणामृग्यजुःसामाथर्वणाञ्चतुर्णामागमानां सर्वज्ञकल्पत्वाद्विशिष्टगुणवतां लिङ्गम्=ईश्वरप्रणीतत्वे लिङ्गमित्यर्थः ॥ १८ ॥

**ननु** कुत एतत्? तत्राह—

**"प्रत्यक्षप्रवृत्तत्वात्संज्ञाकर्मणः ॥ १९ ॥**

संज्ञाकर्मण=एकवद्भावः पूर्ववत्, सज्ञायाः कर्मणश्च प्रत्यक्षप्रवृत्तत्वात्=प्रत्यक्षे विपये प्रवृत्तिमत्त्वादित्यर्थः ।

यस्य हि भूतभविष्यद्वर्तमाना व्यवहितविप्रकृष्टा इष्टानिष्टाः सर्वे विषयाः प्रत्यक्षाः सन्ति, स एव तत्र संज्ञां कर्तुं पारयते । स एव च सन्ध्यावन्दनाग्निहोत्रादिकमिष्टं कर्म विधातुं, सुरापानादिकञ्चानिष्टं कर्म प्रतिषेद्धुमीष्टे । न च ते जीवानां तथा सभवन्ति । तेषां ज्ञानस्योपदेशतन्त्रत्वात् । किन्तु परमपितुर्भगवतः परमेश्वरस्येति स एवादौ चतुर्भिरागमैः संज्ञाकर्मप्रवर्तकोऽभ्युपगन्तव्यः । तथाचागमानां तेषां संज्ञाकर्मलिङ्गेनेश्वरप्रणीतत्वे सिद्धे प्रामाण्यं तावत्सिद्धमेव, तत्सिद्धौ च तत्सिद्धा संज्ञापि प्रामाणिकीति भावः ।

संज्ञाकर्मप्रवृत्तिश्चादौ वेदेभ्य एव जातेति भगवता मनुनाप्यभ्यधायि ।

**अ १—श्लो ॥ २१ ॥**

**सर्वेषान्तु स नामानि कर्माणि च पृथक्पृथक् ।**
**वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ॥ २१ ॥** इति

स=प्रजापतिः, पृथक्संस्था=प्रतिव्यक्ति लौकिकी व्यवस्थेत्यर्थः ॥ १९ ॥

**ननु** भवतु वायुसिद्धौ स्पर्शो लिङ्गं, तेन च तत्सिद्धिः । आकाशसिद्धौ पुनः किं लिङ्गं, येन तदभ्युपेयं? तत्राह—

**"निष्क्रमणं प्रवेशनमित्याकाशलिङ्गम् ॥ २० ॥**

स्पर्शवतो द्रव्यस्य बहिर्गमनं=निष्क्रमणम्, अन्तर्गमनं=प्रवेशनम्, इति=एतत्कर्मद्वयमाकाशलिङ्गम्=आकाशसिद्धौ लिङ्गमित्यर्थः ।

अवकाशेन हि निष्क्रमणं, प्रवेशनं चैतदुभयं कर्म व्याप्तम् । चेत्कश्चिदवकाशं न दद्यात्, तदा तदभावे न निष्क्रमणमुपपद्येत, न प्रवेशनम् । उपपन्नं चानिशं तदुभयम् । ततोऽनुमीयते 'अस्त्याकाशं यदवकाशं ददाति' इति भावः ॥ २० ॥

तदेतदपवदति—

**"तदलिङ्गमेकद्रव्यत्वात्कर्मणः ॥ २१ ॥**

आकाशस्येत्यनुवर्तते । तत्=निष्क्रमणं, प्रवेशनं चेति कर्माकाशस्यालिङ्गं=लिङ्गं नोपपद्यते । **कुतः?** कर्मणः=निष्क्रमणप्रवेशनलक्षणकर्मणस्तस्यैकद्रव्यत्वात्=यन्निष्क्रामति, प्रविशति च, तदेकद्रव्यं, तन्मात्रसमवेतत्वादित्यर्थः ।

एकद्रव्यसमवेतं कर्म कथमपरस्य सिद्धौ लिङ्गमुपपद्येतेति भावः॥२१॥

**ननु** नायं नियमः=यत्र यत्समवैति, तस्य तल्लिङ्गमिति, **अपि च** कारणस्य, कारणं चाकाशं, नियतपूर्ववृत्तित्वात्, तत्राह—

**"कारणान्तरानुक्लृप्तिवैधर्म्याच्च ॥ २२ ॥**

आकाशस्येत्यनुवर्तते । यत्समवेतं कार्य्यमुत्पद्यते, तस्मात्कारणादन्यत्कारणं=कारणान्तरं, तस्य या अनुक्लृप्तिः=अनुक्लृप्यते–ज्ञाप्यतेऽनेनेति व्युत्पत्त्या लक्षणं, तद्वैधर्म्याच्च=तद्विरुद्धलक्षणकत्वाच्चाकाशस्य कर्मकारणत्वं न संभवतीत्यर्थः ।

अन्वयव्यतिरेकाभ्यां हि कारणभावोऽवगम्यते । न चाकाशस्यान्वयो वा व्यतिरेको वा शक्यो निश्चेतुम् । तस्य सर्वकालत्वेन सर्वगतत्वात् । अतो **यथा** ह्यस्य पूर्वभावनियमः, **तथैव** पश्चाद्भावनियमोऽपि, **तथैव** च व्यतिरेकाभावोऽपीति कारणभावानिश्चये नियतपूर्ववृत्तित्वरूपकारणान्तरानुक्लृप्तिवैधर्म्यादकारणमाकाशमिति भावः ॥ २२ ॥

समाधत्ते—

**"संयोगादभावः कर्मणः ॥ २३ ॥**

संयोगात्=कर्मजन्यसंयोगसमवायादाकाशे कर्मणः=निष्क्रमणप्रवेशनलक्षणकर्मणोऽभावः=समवायाभाव इत्यर्थः ।

कर्म हि क्रिया । सा च धात्वर्थत्वात्फलं, व्यापारश्चेति द्वयी । निष्क्रमणं, प्रवेशनं च व्यापारः । तज्जन्यो निष्क्रामतः प्रविशतश्च द्रव्यस्य संयोगः फलम् । तत्राकाशे फलसमवायाद् व्यापारसमवायाभावो, न त्वकारणत्वात् । कारणत्वं च नियतपूर्ववृत्तित्वम् । तच्च तस्य सर्वकालत्वेऽपीश्वरवन्निश्चेतुं शक्यम् । अतः कारणान्तरानुक्लृप्तिवैधर्म्याभावाद् भवति तस्य तल्लिङ्गमिति भावः ।

**"निष्क्रमणं प्रवेशनम्"** इति पूर्वः पक्षः । अग्रिमसूत्रत्रयेण च तन्निरासः । तत्र **"तदलिङ्गम्"** इति सूत्रेणाकाशस्य कर्मसमवायिकारणत्वं निरस्यते । **"कारणान्तरा०"** इति सूत्रेण चासमवायिकारणत्वं, द्रव्यातिरिक्तस्यैव तन्नियमात्, आकाशस्य च द्रव्यत्वात् । **"संयोगादभावः कर्मणः"** इत्यनेन च निमित्तकारणत्वम् । सयोगात्=प्रतिबन्धकीभूतमूर्त्तद्रव्यसंयोगविशेषात्कर्महेतुवेगगुरुत्वादीनां प्रतिबन्धेन कर्मणोऽभावः=अनुत्पादो भवति, न त्वाकाशाभावात् । तस्य व्यापकत्वात् । तस्मादाकाशान्वयोऽन्यथासिद्धो नाकाशनिमित्ततां गमयतीति सर्वथा तस्य कर्मकारणत्वासम्भवे समवायिकारणतया वाऽसमवायिकारणतया वा निमित्तकारणतया वा नाकाशस्य लिङ्गं कर्म सभवतीति शङ्करमिश्रप्रभृतीनां व्याख्यानम् ॥ २३ ॥

निष्क्रमणं, प्रवेशनमित्याकाशलिङ्गमित्युपपादितम् । सम्प्रति शब्दस्य पारिशेष्यादाकाशगुणत्वेन तल्लिङ्गत्वमुपपादयितुं पूर्वं तस्य भूतचतुष्टयगुणतां प्रतिषेधयिष्यन् भूमिकामाह—

**"कारणगुणपूर्वकः कार्य्यगुणो दृष्टः ॥ २४ ॥**

कार्य्यगुणः=कार्य्यस्य घटपटादेर्यो रूपादिविशेषगुणः, स कारणगुणपू-

र्वकः=कारणस्य कपालतन्त्वादेर्यो रूपादिविशेषगुणः, स पूर्वं=कारणं यस्य स तथा दृष्टः=उपलब्ध इत्यर्थः ।

**इदमत्रोपदिष्टं भवति** । कार्य्ये त एव गुणाः प्रादुर्भवन्ति, ये तत्कारणे समवयन्ति । येषां च कारणे न समवायः, न च तत्पूर्वकाः कार्य्यगुणाः कथञ्चिदाविर्भवन्ति । न वा कदाचिदिदमित्थं विपर्य्येति—कारणे वर्तमानाः गुणाः कार्य्ये न प्रादुष्युः, ततो विलक्षणाः वा तत्र प्रादुर्भवेयुः । अतः कार्य्यं दृष्ट्वा निःशङ्कमनुमातुं शक्यते—येऽमी कार्य्य-गुणाः अनुभूयन्ते, नूनं तत्सजातीयास्तत्कारणे विद्यन्ते, ये चात्र कार्य्ये नोपलभ्यन्ते, न च ते तत्रापि वर्तन्ते इति ॥ २४ ॥

**ननु** कारणगुणपूर्वकः कार्य्यगुणो दृश्यतां, किं तेन? तत्राह—

**"कार्य्यान्तराऽप्रादुर्भावाच्छब्दः स्पर्शवतामगुणः ॥२५॥**

कार्य्यान्तराऽप्रादुर्भावात्=दण्डाद्यभिघातेन भेर्य्यादौ कार्य्ये शब्दस्य प्रादुर्भावेऽपि तद्भिन्ने घटपटादौ कार्य्यान्तरे तत्प्रादुर्भावाभावात् शब्दः=शब्दपदार्थः स्पर्शवतां=पृथिव्यप्तेजोवायूनामगुणः=विशेषगुणो नेत्यर्थः ।

**चेत्**स्पर्शवतां द्रव्याणां शब्दो विशेषगुणो भवेत्, **तदा**ऽवश्यं भेर्य्यादिवत् तत्कार्य्यान्तरे घटपटादावपि प्रादुर्भवेत् । अप्रादुर्भवंश्च कथं स तद्विशेषगुणः सिध्येत् । भेर्य्यादौ वा प्रादुर्भवन् तस्मादन्यत्र नोपलभ्येत, यावद् भेर्य्यादिकं चावतिष्ठेत, तरतमादिभावेन च न जात्वनुभूयेत । न हि तेषां रूपादयो विशेषगुणाः कस्मिंश्चित्कार्य्ये प्रादुर्भवन्तः कार्य्यान्तरे नाभिव्यज्यन्ते, तत्राभिव्यज्यमानाः वा तस्मादन्यत्राप्युपलभ्यन्ते, यावदाश्रयं वा नावतिष्ठन्ते, तरतमादिभावेन वा क्वचिदनुभूयन्ते । शब्दस्तु सर्वथा तद्विपरीतः । ततोऽनुमीयते—'नासौ स्पर्शवतां विशेषगुणः, इति भावः ॥ २५ ॥

**ननु** शब्दः स्पर्शवतां पृथिव्यप्तेजोवायूनां विशेषगुणो मा सैत्सीत्, आत्मनो वा, दिक्कालमनसां वा सेत्स्यति, तत्राह—

**"परत्र समवायात्प्रत्यक्षत्वाच्च नात्मगुणो न मनोगुणः ॥ २६ ॥**

शब्द इत्यनुवर्तते । परत्र=परस्मिन्नात्मातिरिक्ते द्रव्ये समवायात्=समवेतत्वात्, प्रत्यक्षत्वाच्च=श्रावणप्रत्यक्षविषयत्वाच्च शब्दो **नात्मगुणः**=नात्मनो विशेषगुणः, **न** मनोगुणः=मन इत्युपलक्षणं, **न वा** दिक्कालमनसां विशेषगुण इत्यर्थः ।

शब्दश्चेदात्मनि समवेयात्, **न** बहिरिन्द्रियप्रत्यक्षतामियात् **नचाऽह**ङ्कारेण विभक्तो गृह्येत, **नचाऽऽ**त्मान्तरेणानुभूयेत। शब्दश्च तथा, तस्मान्नात्मविशेषगुणः । श्रोत्रग्राह्यत्वाद्विशेषगुणत्वाच्च न दिक्कालमनसां गुण इति भावः ।

**अत्र** प्रथमहेतोः साध्यत्वमालोच्य द्वितीयो हेतुरुपन्यस्तः, सिद्धस्यैव हेतुत्वोपपत्तेरिति ध्येयम् ।

परत्र समवायान्नात्मगुणः, प्रत्यक्षत्वाच्च न दिक्कालमनसां गुण इति शङ्करमिश्रः ॥ २६ ॥

**ननु** यदि नाम शब्दः पृथिव्यादीनामष्टानां द्रव्याणां विशेषगुणो न भवति, मा भूत्, आकाशस्य सिद्धौ **किमायातं**? तत्राह—

**"परिशेषाल्लिङ्गमाकाशस्य ॥ २७ ॥**

शब्दो गुण इत्यनुवर्तते । परिशेषात्=शब्दो गुणः, तेन नान्तरेण गुणिना भवितव्यम्, न च पृथिव्यादयोऽष्टौ तस्य गुणिनः सिध्यन्ति, तद्भिन्नेषु च गुणकर्मादिषु न तत्प्रसङ्गः, तस्माद् यस्यैष गुणिनो विशेषगुणः, तदाकाशमिति परिशेषानुमानादाकाशस्य=अष्टद्रव्यातिरिक्तस्याकाशपदार्थस्य शब्दो गुणः=विशेषगुणः सिद्धो भूत्वेतिशेषः, लिङ्गं=भवति तत्सिद्धौ लिङ्गमित्यर्थः ।

**तत्र** प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणे सम्प्रत्ययः परिशेषः । शब्दः, क्वचिदाश्रितः, गुणत्वाद्, इच्छादिवदिति सामान्यतोदृष्टाकारः । शब्दः, पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितः, अष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वात्, यन्नैवं, तन्नैवं, यथा सयोगादिकमिति तु तदाकारः । शब्दो, विशेषगुणः जातिमत्त्वे सति बाह्यैकेन्द्रियमात्रग्राह्यत्वात्, रूपवदिति विशेषगुणतासाध-

कमनुमानम् । बाह्येन्द्रियत्वं च प्रतिनियतार्थविषयत्वं, नियमेन बाह्यार्थप्रकाशकत्वं वेति विवेकः ॥ २७ ॥

**यथाऽऽत्मगुणता ह्रीच्छाद्वेषादेरुपपद्यते ।**
**शब्दो नयेन तेनैव भविष्यति नभोगुणः ॥ १ ॥**

**ननु** परिशेषात्केवलं शब्दस्याश्रयभूतमाकाशं सिध्यति, न द्रव्यं, न व्यवहारभूमौ नित्यं, तत्राह—

**"द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ २८ ॥**

आकाशस्येत्यनुवर्तते । द्रव्यत्वनित्यत्वे=द्रव्यत्वं, नित्यत्वं चाकाशस्य वायुना=वायोर्द्रव्यत्वनित्यत्वसाधकेन गुणवत्त्वेनाद्रव्यत्वेन च हेतुना व्याख्याते=प्रतिपादिते वेदितव्ये इत्यर्थः ।

तत्र गुणवत्त्वाद् द्रव्यत्वम्, अद्रव्यत्वान्नित्यत्वं व्याख्यातमिति विवेकः ॥ २८ ॥

**ननु** द्रव्यत्वनित्यत्वे वायुना व्याख्यायेताम्, एकत्वं तस्य **केन** व्याख्यास्यते? तत्राह—

**"तत्त्वं भावेन ॥ २९ ॥**

आकाशस्य व्याख्यातमिति विपरिणम्यानुवर्तते । तत्त्वम्=एकत्वमाकाशस्य भावेन=सत्तया व्याख्यातमित्यर्थः ।

सत्तायाः यथैकत्वं, तथाकाशस्यापि वेदितव्यमिति भावः ॥ २९ ॥

**ननु** सदिति लिङ्गाविशेषाद् विशेषलिङ्गाभावाच्च भावस्यैकत्वम्, आकाशस्य तत्कुतः स्यात्? तत्राह—

**"शब्दलिङ्गाविशेषाद्विशेषलिङ्गाभावाच्च ॥ ३० ॥**

आकाशस्य तत्त्वमित्यनुवर्तते । शब्दलिङ्गाविशेषात्=शब्दरूपलिङ्गस्य भेदाभावात्=समानत्वाद्, विशेषलिङ्गाभावाच्च=भेदे लिङ्गस्यानुपलम्भाच्चाकाशस्य तत्त्वमित्यर्थः ।

आकाशस्य लिङ्गं शब्दः, स च सर्वत्राविशिष्टः, विशेषे च लिङ्गान्तरानुपलम्भ, इति सत्तावदेकमाकाशमिति भावः ॥ ३० ॥

ननु शब्दलिङ्गाविशेषादेकत्वे सिद्धेऽपि तस्यैकपृथक्त्वं कुतः सिध्येत्? तत्राह—

**"तदनुविधानादेकपृथक्त्वं चेति ॥ ३१ ॥**

इतिराह्निकसमाप्तिमाह। आकाशस्येत्यनुवर्तते। तदनुविधानात्=तस्यैकत्वस्य यत्पृथक्त्वेनानुविधानं=यत्रयत्रैकत्वं तत्रतत्रैकपृथक्त्वमिति साहचर्य्यनियमः, तस्मादेकपृथक्त्वं च=एकपृथक्त्वमपि व्योम्नः सिद्धमित्यर्थः।

**क्षित्यादिपञ्चभूतानां लक्षणं लक्ष्यगं तथा।**
**नभोनभस्वतोरीक्षा सम्यगत्र प्रदर्शिता ॥ १ ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृतायां वैशेषिकसूत्रवैदिकवृत्तौ द्वितीयाध्यायस्याद्यमाह्निकम्।



# द्वितीयोऽध्यायः ।

## द्वितीयमाह्निकम् ।

पूर्वस्मिन्नाह्निके पृथिव्यादीनि पञ्च महाभूतानि लक्षितानि । सम्प्रति तल्लक्षणानि परीक्ष्यन्ते । तत्रादौ पृथिवीलक्षणं गन्धं परीक्षयिष्यन्नाचार्य्यः पृथिवीतोऽन्यत्र तदभावे लिङ्गमाह—

**"पुष्पवस्त्रयोः सति सन्निकर्षे गुणान्तराप्रादुर्भावो वस्त्रे गन्धाभावलिङ्गम् ॥ १ ॥**

पुष्पवस्त्रयोः=कुसुमवाससोः सति सन्निकर्षे=संयोगलक्षणे सान्निध्ये सति वस्त्रे पुष्पगन्धस्य प्रादुर्भावेऽपि यो गुणान्तराप्रादुर्भावः=कार्य्यगुणादन्यः कारणगुणो गुणान्तरं, तत्पूर्वकोऽप्रादुर्भावः=तदनुत्पादः स वस्त्रे=कुसुमसंयुक्ते वाससि तस्मिन् गन्धाभावलिङ्गं=पुष्पसन्निकर्षादुपलभ्यमानो गन्धो न वस्त्रस्य स्वाभाविको गुणः, तत्कारणगुणपूर्वकत्वाभावात्, शीतोष्णस्पर्शवदिति स्वभावतः पुष्पगन्धाभावस्यानुमितौ लिङ्गमित्यर्थः ।

**तथा** च वस्त्रे पुष्पसम्बन्धादुपलभ्यमानो गन्धो **यथा** न तस्य स्वाभाविको गुणः किं त्वौपाधिकः, **तथा** जलादावप्युपलभ्यमानो गन्धो न तस्य स्वाभाविको गुणो मन्तव्यः, अपि चौपाधिक इति भावः ॥ १ ॥

**ननु** जलादौ चेद् गन्धो नास्ति, **क्व** तर्हि गन्धो व्यवतिष्ठते? तत्राह—

**"व्यवस्थितः पृथिव्यां गन्धः ॥ २ ॥**

यस्मादन्यत्र जलादौ गन्धाभावे लिङ्गमस्ति, पृथिव्यां च तन्नास्ति, तस्माद्गन्धः=सुरभ्यसुरभिभेदभिन्नो द्विविधो गन्धः पृथिव्यां=क्षितावेव व्यवस्थितः=विशेषेण=गन्धवत्येव पृथिवी, पृथिव्येव गन्धवतीत्ययोगान्ययोगव्यवच्छेदेनावस्थितः=प्रतिष्ठित इत्यर्थः ।

तथा च स्वाभाविको गन्धः पृथिव्याः लक्षणमिति न जलादावतिप्रसङ्ग इति भावः ॥ २ ॥

पृथिवीलक्षणं परीक्षितं, जलादिलक्षणं परीक्षमाणोऽतिदिशति—

**"एतेनोष्णता व्याख्याता ॥ ३ ॥**

एतेन=गन्धस्य स्वभाविकत्वौपाधिकत्वव्यवस्थापनप्रकारेणोष्णता=शीततताऽप्युपलक्षणीया, उष्णता, शीतता चापि व्याख्याता=क्वचित्स्वाभाविकी क्वचिदौपाधिकी व्याख्याता वेदितव्येत्यर्थः ॥ ३ ॥

व्याख्यानफलमाह—

**"तेजस उष्णता ॥ ४ ॥**

व्याख्यातेत्यनुवर्तते । तेजसः=तेजोद्रव्यस्योष्णता=स्वाभाविक्युष्णता-व्याख्याता=लक्षणतया व्यवस्थापिता बोद्धव्येत्यर्थः ।

तेन जलादौ नातिप्रसङ्ग इति भावः ॥ ४ ॥

**"अप्सु शीतता ॥ ५ ॥**

व्याख्यातेत्यनुवर्तते । अप्सु=पयसि शीतता=स्वाभाविकी शीतता लक्षणतया व्याख्यातेत्यर्थः ।

शिलातलादौ शीततप्रतीतावपि न लक्षणातिप्रसङ्गः, तत्रतत्प्रतीतेरौपाधिकत्वादिति भावः ।

तत्र **यथा** गन्धादिकं स्वाभाविकमौपाधिकं च क्वचित्, **तथा** रूपादिगुणान्तरमपि स्वाभाविकमौपाधिकं च क्वचित्प्रतिपत्तव्यमिति द्योतनायोद्देशक्रमभङ्गः, वायुलक्षणस्य परीक्षितत्वद्योतनाय वा क्रमभङ्गः, शैत्यं विपर्य्येति नौष्ण्यमिति सूचनाय वा स इति विवेकः ॥ ५ ॥

पृथिव्यादीनां चतुर्णां लक्षणानि परीक्षितानि । व्योमलक्षणं शब्दः परीक्षयिष्यते । सम्प्रति कालः परीक्षणीयः, उद्देशक्रमप्राप्तत्वात्, अतः पूर्वं तावत् तत्सद्भावे लिङ्गानि दर्शयति—

**"अपरस्मिन्नपरं युगपच्चिरं क्षिप्रमिति काललिङ्गानि ॥६॥**

इतिशब्दो ज्ञानप्रकारमाह । तस्य च प्रत्येकमन्वयः । अपरस्मिन्नपरमित्युपलक्षणम्, परस्मिन् परमित्यपि द्रष्टव्यम् । अपरस्मिन्=अल्पतरतपनपरिस्पन्दान्तरितजन्मनि यूनि स्थविरं मर्य्यादीकृत्यापरमिति ज्ञानं, परस्मिन्=बहुतरतपनपरिस्पन्दान्तरितजन्मनि स्थविरे युवानं सीमीकृत्य परमिति

ज्ञानं. युगपत्=युगपज्ज्ञायन्ते, युगपत्तिष्ठन्ति, युगपत्कुर्वन्तीतियुगपज्ज्ञानं, चिरं=चिरं जीवति, चिरं जातमिति चिरज्ञानं, क्षिप्रं=क्षिप्रं गच्छति, क्षिप्रं करोतीति क्षिप्रज्ञानमिति=एतानि ज्ञानानि काललिङ्गानि स्वनिमित्ततया कालस्यानुमापकानीत्यर्थः ।

यमपेक्ष्य हि यस्य भूयसां सूर्य्यपरिस्पन्दानां सम्बन्धः, स तदपेक्षया स्थविरपिण्डः परः, तमपेक्ष्य यस्य चाल्पानां तेषां सम्बन्धः, स तदपेक्षया युवपिण्डोऽपरः । परत्व ज्येष्ठत्वम्, अपरत्वं च कनिष्ठत्वम् । न च स्थविरयुवपिण्डाभ्यां सूर्य्यपरिस्पन्दानां साक्षात्सम्बन्धो विद्यते । सूर्य्ये तत्समवायात् । न वा तत्सम्बन्धमन्तरेण स्थविरे परं, यूनि चापरमिति ज्ञानमुत्पत्तुमर्हति । तस्य तत्प्रयोज्यत्वात् । न हि पृथिव्यादयश्चत्वारस्तत्सम्बन्धारः सम्भवन्ति । तेषामव्यापकत्वेन पिण्डसंयोगे सत्यपि सूर्य्येण तदभावात् । न चाकाशमपि तत्सम्बन्द्धृ सम्भवति । तस्य तत्स्वभावकल्पने ऽतिप्रसङ्गात् । दैशिकं परत्वमपरत्वं चेतो विलक्षणम् । अचेतनं चान्यधर्ममन्यत्रोपनयद् दृष्टम्, **यथा**—पुष्पस्य गन्धं वायु । अतो भूम्यादिभ्यो भिन्नं यदचेतनं द्रव्यं स्थविरयुवपिण्डाभ्यां सूर्य्येण च संसृज्य स्वसमवायिसंयुक्तसंयोगलक्षणया प्रत्यासत्त्या, स्वसंयुक्तसंयुक्तसमवायलक्षणया वा प्रत्यासत्त्या, तत्परिस्पन्दान् पिण्डाभ्यां सम्बध्नाति, पूर्वत्र स्वं परिस्पन्द., चरमे पिण्डं, तदेव द्रव्यं काल, इति भवति परस्मिन् परमपरस्मिंश्चापरमिति ज्ञानं कालसिद्धौ लिङ्गम् । एवमेकेन सूर्य्यपरिस्पन्देनावच्छिन्नाः अनेकाः क्रियाः युगपज्ज्ञानेन गोचरी क्रियन्ते । क्रमेण भवद्भिरनेकैः स्थूलभूतैः सूर्य्यपरिस्पन्दैश्चावच्छिन्ना क्रिया चिरज्ञानेन, तथाभूतैरनेकैरल्पतरैश्च सूर्य्यपरिस्पन्दैरवच्छिन्ना क्रिया क्षिप्रज्ञानेन, गोचरी क्रियते । तत्र सूर्य्यपरिस्पन्ददेवदत्तादिपरिस्पन्दयोश्च मिथः सम्बन्धो भूम्यादिभिर्न घटते, ज्ञानान्यथाऽनुपपत्त्या सम्बन्धेन चावश्यं भवितव्यम् । अतो यद्द्रव्यं संयुक्तसमवायेन ताभ्यां संसृज्य तयोः परस्परं स्वसमवायिसंयुक्तसंयुक्तसमवायलक्षणं सम्बन्धं करोति, तदेव द्रव्यं काल इति भवति युगपच्चिरं क्षिप्रमिति ज्ञानमपि कालसिद्धौ लिङ्गमिति भाव ।

तत्रैकसूर्य्यपरिस्पन्दावच्छिन्नकालसम्बन्धिन्यः क्रियाः युगपत्प्रत्ययगोचरः, वृहत्तरानेकसूर्य्यपरिस्पन्दावच्छिन्नकालसम्बन्धिनी क्रिया चिरप्रत्ययगोचरः, अल्पतरानेकसूर्य्यपरिस्पन्दावच्छिन्नकालसम्बन्धिनी क्रिया क्षिप्रप्रत्ययगोचर इति विवेकः ॥ ६ ॥

**नन्व**परं परं युगपच्चिरं क्षिप्रमिति प्रत्ययलिङ्गेन तन्निमित्तभूतः कश्चित्कालः सिध्यति, न द्रव्य न वा व्यवहारभूमौ नित्यं, तत्राह—

**"द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ ७ ॥**

कालस्येति प्रकरणाल्लभ्यते । द्रव्यत्वनित्यत्वे=पूर्वोक्तलिङ्गस्य कालस्य द्रव्यत्वं, नित्यत्वं च वायुना=वायोर्द्रव्यत्वनित्यत्वसाधकहेतुना व्याख्याते=साधिते वेदितव्ये इत्यर्थः ॥ ७ ॥

**ननु** द्रव्यत्वनित्यत्वे कालस्य वायुना व्याचष्टाम्, एकत्वं **केन** व्याख्यास्यति ? तत्राह—

**"तत्त्वं भावेन ॥ ८ ॥**

व्याख्यातमिति विपरिणम्यानुवर्तते । तत्त्वं=कालस्यैकत्वं भावेन=सत्तया व्याख्यातं वेदितव्यमित्यर्थः ।

**यथा** सदितिलिङ्गाविशेषाद्विशेषलिङ्गाभावाच्च भावस्यैकत्वम्, **एवं** परापरादिप्रत्ययलिङ्गाविशेषाद्विशेषलिङ्गाभावाच्च कालस्यैकत्वं व्याख्यातमिति भावः ।

तत्र परमार्थतः कालस्यैकत्वम्, उपाधितश्च=क्षण-लव-निमेष-काष्ठा-कला-मुहूर्त-यामा-होरात्रार्द्धमास–मासर्त्वयन–संवत्सर–युग–कल्पादिभेदात्, शान्तोदिताव्यपदेश्यभेदाच्च नानात्वम् । उपाधिश्च सूर्य्यादिपरिस्पन्दः । कार्य्याणामारम्भक्रियाभिनिर्वृत्तिस्थितिनिरोधाश्चेति विवेकः ।

तत्रोत्पन्नं द्रव्यं यावद्गुणमुत्पद्यते, अन्त्यतन्तुसंयोगे वा यावन्न पटः, उत्पन्ने वा कर्मणि यावन्न विभागः, तावत्कालः=क्षणः । सामग्री वा कार्य्यरहिता=क्षणः, **इत्युदयनाचार्य्यः** । निमेषस्य चतुर्थो भागः=क्षणः, क्षणद्वयेन लवः, अक्षिपक्ष्मकर्मोपलक्षितकालः=निमेष इति **भट्टश्रीधरः** । स्व-

जन्यविभागप्रागभावावच्छिन्नं यत्कर्म तदुपलक्षितःकालः प्रथमः क्षणः । स्वं कर्म । पूर्वसंयोगावच्छिन्नविभागोपलक्षितः कालो द्वितीयः क्षणः । पूर्वसंयोगनाशावच्छिन्नोत्तरसंयोगप्रागभावोपलक्षितः कालस्तृतीयः क्षणः । उत्तरसंयोगावच्छिन्नकर्मोपलक्षितः कालश्चतुर्थः क्षणः । उत्तरसंयोगे सति कर्मनाशात्पुनः कर्मान्तरेण क्षणव्यवहारः, क्षणकूटैश्च दिनादिव्यवहार इति **विश्वनाथः** । एवं कार्य्याणामारम्भः=प्रागभावः, क्रिया=व्यापार इति तदुपलक्षितः कालो भविष्यत् कालः । अभिनिर्वृत्तिः=सिद्धिः, स्थितिः=आविनाशात्क्रमवत्सहकारिसम्बन्धस्तदुपलक्षितः कालो वर्तमानकालः । निरोधः=विनाशस्तदुपलक्षितः कालोऽतीतकालः । उत्पत्तिस्थितिनिरोधयोगिफलावच्छेदेन नानाक्षणपरम्परात्मिकापि क्रियेत्युच्यते । सा वर्तमानादिभेदवती च । तथाहि । स्थाल्यधिश्रयणात्प्रभृति आ तदवतरणादुत्पद्यमानौदनाख्यफलावच्छेदात् क्रिया वर्तमानोच्यते—पचतीति । तदवच्छेदाद् घटाकाशवत्कालोऽपि तावान् वर्तमान इत्युच्यते । अभिनिर्वृत्तफलावच्छेदात्मा क्रियासन्ततिश्चातीता भवति=अपाक्षीदिति । तदवच्छेदात्कालोऽप्यतीत उच्यते । अनारब्धफलावच्छेदाद् भविष्यन्ती क्रियोच्यते—पक्ष्यतीति । तदवच्छेदात्कालोऽपि भविष्यन्निति तु **जयन्तभट्ट** इति प्रविवेकः ॥ ८ ॥

**ननु** परापरादिप्रत्ययलिङ्गेन सिद्धे तस्मिन् नित्यैकद्रव्ये कालसंज्ञासिद्धिः **कुत** इत्याशङ्क्यान्वयव्यतिरेकाभ्या तस्य कार्य्यमात्रे हेतुत्वमुपपादयन्नागमात्कालसंज्ञासिद्धिमाह—

**"नित्येष्वभावादनित्येषु भावात्कारणे कालाख्येति॥९॥**

इतिशब्दः कालनिरूपणप्रकरणोपसंहारमाह । नित्येषु=परमार्थनित्येषु व्यवहारभूमौ नित्येषु च अभावात्=युगपज्जातः, चिरञ्जातः, क्षिप्रञ्जातः, इदानीं जातः, दिवा जातः, नक्तं जात इत्यादिप्रत्ययानामभावात्, अनित्येषु=कार्य्येषु=घटपटद्युभूम्यादिषु भावात्=उक्तप्रत्ययसद्भावात्कार्य्यमात्रकारणं कालः । तस्मिँश्च कारणे **"कालोऽमूं दिवमजनयत्, काल इमाः पृथिवीरुत" अथर्व–कां १९–सू ५३–मं ५** इत्याद्यागमसिद्धा कालाख्या=कालसंज्ञेत्यर्थः ॥ ९ ॥

**"द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ ११ ॥**

दिश इति प्रकरणाल्लभ्यते । द्रव्यत्वनित्यत्वे=परत्वापरत्वलिङ्गेन सामान्यतः सिध्यन्त्यो दिशो द्रव्यत्वं नित्यत्वं च वायुना=वायुद्रव्यत्वनित्यत्वसाधकहेतुना व्याख्याते=साधिते वेदितव्ये इत्यर्थः ॥ ११ ॥

**ननु** द्रव्यत्वनित्यत्वे वायुना व्याचष्टाम्, एकत्वं **केन** व्याख्यास्यति ? तत्राह—

**"तत्त्वं भावेन ॥ १२ ॥**

व्याख्यातमिति विपरिणम्यानुवर्तते । दिशः सम्बन्धः प्रकरणात् । तत्त्वं=दिगेकत्वं भावेन=सत्तया व्याख्यातं वेदितव्यमित्यर्थः ।

**यथा** सदिति लिङ्गाविशेषाद्, विशेषलिङ्गाभावाच्च भावस्यैकत्वम्, **एव**मिदं दूरमिदमन्तिकमिति दिग्लिङ्गाविशेषाद्विशेषलिङ्गाभावाच्च दिशस्तत्त्वमिति भावः ॥ १२ ॥

**ननु** चेदेकैव दिक्, **कथं** तर्हि प्राचीयं प्रतीचीयं दक्षिणेयमुदीचीयमिति तन्नानात्वव्यपदेशः ? तत्राह—

**"कार्य्यविशेषेण नानात्वम् ॥ १३ ॥**

कार्य्यविशेषेण=परमार्थतो दिशस्तत्त्वेऽपि सूर्य्यसंयोगलक्षणेनोपाधिभूतेन कार्य्यविशेषेण नानात्वं=नानाव्यपदेशभाक्त्वमित्यर्थः ॥ १३ ॥

तदेवोपपादयति—

**"आदित्यसंयोगाद् भूतपूर्वाद् भविष्यतो भूताच्च प्राची ॥ १४ ॥**

आदित्यसंयोगादिति विशेष्यम्, इतरत्पञ्चम्यन्तं पदत्रयं च विशेषणम् । भूतपूर्वात्=पूर्वं—सर्गारम्भे भूतो भूतपूर्वः=शान्तः=अतीतः, तस्मात्, भविष्यतः=भविष्यन्नव्यपदेश्यस्तस्मात्=भाविनः, भूताच्च आदिकर्मणि क्तः, तेन वर्तमानलाभः—भूतम्=उदितं=वर्तमानं, तस्माच्चादित्यसंयोगात्=प्राथमिकाद्यिसम्बन्धात् प्राची=प्रागस्यामञ्चति=प्राप्नोति सूर्य्य इति तद्व्युत्पत्तेः प्राची दिगिति व्यपदेश इत्यर्थः ।

यस्यां दिशि भगवानादित्यः सर्गारम्भे प्रथममुदैत्, अग्रे चोदेष्यति, सम्प्रति चोदेति, सा दिक्=प्राचीति भावः ॥ १४ ॥

अतिदिशति—

**"तथा दक्षिणा प्रतीच्युदीची च ॥ १५ ॥**

आदित्यसंयोगाद् भूतपूर्वाद् भविष्यतो भूताच्चेत्यनुवर्तते । तथा=यथोक्तादित्यसयोगात्प्राचीति व्यपदिश्यते, तथा तथाभूततत्सयोगाद् दक्षिणा, प्रतीच्युदीची च दिगिति व्यपदेष्टव्यमित्यर्थः ।

प्राच्यभिमुखस्य पुरुषस्य दक्षिणे भागे यस्यां दिशि भूतपूर्वो वा, भविष्यन् वा, भवन् वा सूर्य्यसंयोगः, सा दक्षिणा=अवाची दिक् । अवागस्यामञ्चति सूर्य्य इति । यस्यां च तस्यैव पृष्ठभागे स, सा प्रतीची दिक् । तत्र हि प्राच्यपेक्षया सूर्य्यः प्रातिकूल्येनाञ्चति । प्राच्यामुदयः, प्रतीच्यां चास्तमय इति प्रातिकूल्यम् । यस्यां च तस्यैव वामभागे स, सोदीची दिक् । उदगञ्चनात् । तत्र हि सूर्य्यः पृथिव्या ऊर्ध्वं दूरमञ्चतीति भावः ॥ १५ ॥

**"एतेन दिगन्तरालानि व्याख्यातानि ॥ १६ ॥**

एतेन=प्राच्यादिषु दर्शितप्रकारेण दिगन्तरालानि=प्रागवाची, अवाक् प्रतीची, प्रत्यगुदीची, उदक्प्राची, अध उर्ध्वेति मध्यगा विदिशोऽपि षट् व्याख्यातानि=व्याख्याता वेदितव्या इत्यर्थः ।

**यद्यप्येका** दिक् । **तथाप्युपाधि**भेदात् प्राच्यादिभेदेन सा दशधा व्यपदिश्यते । तत्र सूर्य्योदयसन्निहिता दिक् प्राची, तद्व्यवहिता दिक् प्रतीची, प्राच्यभिमुखस्थितपुरुषवामदेशावच्छिन्ना दिगुदीची, तादृक्पुरुषदक्षिणदेशावच्छिन्ना दिगवाची । वामत्वदक्षिणत्वे च शरीरावयववृत्तिजातिविशेषौ । यतः पतति सा दिगूर्ध्वा । यत्र पतति साऽधः । एवमन्या अपि विदिशः कल्पनीया इति दिक् ॥ १६ ॥

पर्य्याप्ता दिक्परीक्षा । सम्प्रति व्योमलक्षणं शब्दं परीक्षणीयं मन्यमानः पूर्वं तावत् परीक्षाङ्गभूतं संशयं कारणतो लक्षणतश्च व्युत्पादयति—

**"सामान्यप्रत्यक्षाद् विशेषाप्रत्यक्षाद् विशेषस्मृतेश्च संशयः ॥ १७ ॥**

सामान्यप्रत्यक्षात्=सामान्यस्य कोटिद्वयसहचरितस्य साधारणधर्मस्योच्चैस्तरत्वादेः प्रत्यक्षात्=उपलम्भात्। अनेन धर्म्युपलम्भोऽपि सङ्गृह्यते। तेन साधारणधर्मवतो धर्मिणः प्रत्यक्षादिति निष्कर्षः। विशेषाप्रत्यक्षात्=विशेषस्य अन्योऽन्यव्यावर्तकस्य वक्रकोटरशिरःपाण्यादेरसाधारणधर्मस्याप्रत्यक्षात्=उपलम्भाभावात्, विशेषस्मृतेश्च=विशेषस्य सामान्यविशेषस्य स्थाणुत्वपुरुषत्वगोत्वगव्यत्वादेः स्मृतेः=स्मरणात्=उपस्थितेरिति यावत्। चकारेण दुरदृष्टमपि समुच्चीयते। दुरदृष्टाच्च संशयः=किंस्विदिति विरुद्धधर्मद्वयावलम्बी प्रत्ययो भवतीत्यर्थः।

**यदा** हि प्रतिपत्ताऽयमुभयसाधारणं कञ्चिद्धर्मं क्वचिदेकत्र धर्मिणि प्रतिपद्यते, तस्य धर्मिणो विशेषञ्च कुतश्चिन्निमित्तान्नोपलभते, पूर्वप्रतीतयोः परस्परविरुद्धयोः सामान्यविशेषयोश्च स्मरति, स्मृतयोश्च तयोर्मिथो विरुद्धत्वादेकत्र सद्भावं, तदविनाभूतस्य च सामान्यस्य दर्शनान्नाप्यभावं, सम्भावयति, **तदा**ऽस्य प्रतिपत्तुः सामान्याश्रयत्वेनावधारिते धर्मिणि विशेषानवधारणात्मको यः प्रत्ययो जायते, स एव संशय इति भावः।

तत्र साधारणधर्मोपलम्भो मुख्यं कारणं, तदितरत्सर्वं सहकारिकारणम्, एकस्मिन् धर्मिणि विरुद्धनानाधर्मप्रकारकज्ञानत्वं च संशयत्वमिति विवेकः॥ १७॥

**ननु** यस्य सामान्यस्य प्रत्यक्षं संशयस्य मुख्यं कारणमाख्यायते, तत् **कीदृशं** विवक्षितं? तत्राह—

**"दृष्टं च दृष्टवत्॥ १८॥**

दृष्टं च=उपलब्धं चोच्चैस्तरत्वादिसामान्यं दृष्टवत्=दृष्टाभ्यां स्थाणुपुरुषप्रभृतिभ्यां तुल्यं पुरोवर्तिनि वर्तमानं विवक्षितमित्यर्थः।

यत्सामान्यं स्थाणुपुरुषयोर्गोगवययोर्वा वर्तते, तस्यैव कालान्तरे देशान्तरे वा पुरोवर्तिनि प्रत्यक्षात् तद्विशेषस्य चाप्रत्यक्षात्सामान्यविशेषयोश्च स्मरणात्स्थाणुर्वा पुरुषो वा गौर्वा गवयो वा इत्यादिः संशयो भवति, नान्यस्य, तस्मात् पुरोवर्तिनि वर्तमानं सामान्यं, यस्य प्रत्यक्षात्संशयो भवति, स्थाणुपुरुषप्रभृतिवृत्तिसामान्यं चैकं विवक्षितमिति भावः॥१८॥

कारणतो लक्षणतश्च संशयो व्युत्पादितः । स च कारणस्यैकविधत्वादेकविधः सन्नप्यवान्तरभेदाद् द्विविधो भवति—बाह्यविषयः आभ्यन्तरविषयश्च । बाह्यविषयोऽपि पुनर्द्विविध.—अनेकधर्मिवृत्तिविशेषानुस्मृतिपूर्वकः एकधर्मिवृत्तिविशेषानुस्मृतिपूर्वकश्च । तत्राद्य· स्थाणुर्वा पुरुषो वा गौर्वा गवयो वा, इत्यादिकः प्रसिद्ध एवेति मन्यमानो द्वितीयं तावद् बाह्यविषयं संशयभेदमुदाहरति—

**"यथादृष्टमयथादृष्टत्वाच्च ॥ १९ ॥**

"सामान्यप्रत्यक्षाद्विशेषाप्रत्यक्षाद्विशेषस्मृतेश्च संशयः" इत्यनुवर्तते । संशयश्च द्विरावृत्तिः । यथादृष्टं=येन प्रकारेण विशिष्टं चैत्रमैत्रादिकं दृष्टं—जटिलं वा मुण्डं वा, पुनरयथादृष्टत्वाच्च=यथापूर्वं दृष्टं ततो विपर्य्ययेण दृष्टत्वाच्च मुण्डं वा जटिलं वा, तदनु कालान्तरे प्रावृतशिरसि दृष्टे तस्मिन् चैत्रत्वादिसामान्यप्रत्यक्षाद् जटादिविशेषाप्रत्यक्षाद् जटिलत्वादिविशेषस्मृतेश्च 'किमय जटिलो वा मुण्डो वेति यः सशय., स एकधर्मिवृत्तिविशेषानुस्मृतिपूर्वको बाह्यविषयः सशय इत्यर्थः ।

स्थाणुर्वा पुरुषो वा इत्यादौ हि यः स्थाणुर्नासौ पुरुषः, यश्च पुरुषो नासौ स्थाणुः । अत्र तु य एव जटिलः स एव मुण्डः, य एव मुण्डः स एव जटिल इति विशेषः ॥ १९ ॥

आन्तरविषयं संशयभेदमुदाहरति—

**"विद्याऽविद्यातश्च संशयः ॥ २० ॥**

"सामान्यप्रत्यक्षाद् विशेषाप्रत्यक्षाद् विशेषस्मृतेश्च संशयः" इति सूत्रमनुवर्तते । तत्रानुवृत्तं सशयपदं सशयसामान्यमाह, सौत्र तु संशयविशेषम् । तस्य चावृत्त्या लाभसभवेऽप्यान्तरत्वलक्षणवैलक्षण्यलाभाय साक्षादुपादानम् । संशयान्तरस्योदाहरणमेतदिति सूचनाय चकारः । विद्याविद्यातश्च=पञ्चम्यास्तसिल्, सम्यग् ज्ञानं विद्या, मिथ्याज्ञानमविद्या, ताभ्यां दृष्टाभ्यां कदाचिदुत्पन्ने मनसि तादृग्ज्ञानधर्मिणि कस्मिँश्चिद्ज्ञानत्वसामान्यस्य प्रत्यक्षात्, तद्वति तत्प्रकारकत्वादिलक्षणविशेषस्याप्रत्यक्षात्, सम्यक्त्वा-

द्विविशेषस्य स्मृतेश्च, "किमिदं ममोत्पन्नं ज्ञानं सम्यग् वा मिथ्या वा" इति यः संशयः, स आन्तरविषयः संशय इत्यर्थः,

एकदा जले जलज्ञानमुत्पन्नं सम्यग् जातम् । अन्यदा मरुमरीचिकायां मिथ्या । तदनु च कदाचिद्वनङ्गतस्य दूरतो लिङ्गदर्शनाज्जायमाने वृक्षसङ्घेषु जलज्ञाने "किमिदं ममोत्पन्नं जलज्ञानं सम्यग् वा मिथ्या वा" इति यः संशयः, यथा वा केनचिदादेशिकेनैकदा किञ्चिन्निमित्तमुपलभ्यादिष्टं 'किञ्चिदिष्टमनिष्टं वा भविष्यति, तत्तथैव वृत्तम्, अन्यदा चादिष्टं वितथम्, सम्प्रति तथाभूतमेव निमित्तमुपलभ्यादिशतस्तस्यान्तः स्वज्ञाने "किमिदं ममोत्पन्नं ज्ञानं सम्यग् वा मिथ्या वा" इति यः संशयः, स आन्तरविषयः संशय इति भावः ॥ २० ॥

यत्परीक्षार्थं परीक्षाङ्गभूतः संशयः सावान्तरप्रभेदः कारणतो लक्षणतश्च व्युत्पादितः, साम्प्रतं तमेव परीक्षणीयं संशयधर्मिणं शब्दं लक्षणमुखेनावतारयति—

**"श्रोत्रग्रहणो योऽर्थः स शब्दः ॥ २१ ॥**

श्रोत्रग्रहणः=श्रोत्रं श्रोत्रेन्द्रियं ग्रहणं ग्रहकरणं यस्य, स तथोक्तो यः=यो धर्मिभूतोऽर्थः=पदार्थः, स शब्द इत्यर्थः ।

श्रोत्रग्राह्यो गुणः शब्द इति भावः ॥ २१ ॥

संशयधर्मिणं शब्दं लक्षणमुखेनावतार्याकाशलिङ्गत्वसिद्धये स्वाभीष्टं गुणत्वं व्यवस्थापयिष्यंस्तत्र संशयं तावदुत्थापयति—

**"तुल्यजातीयेष्वर्थान्तरभूतेषु विशेषस्योभयथादृष्टत्वात् ॥ २२ ॥**

संशयः शब्दे इति विपरिणम्यानुवर्तते । तुल्यजातीयेषु=शब्दसमानप्रकारकेषु रूपादिगुणेषु, अर्थान्तरभूतेषु=ततो भिन्नप्रकारकेषु पदार्थेषु पृथिव्यादिद्रव्येषु उत्क्षेपणादिकर्मसु च, विशेषस्य=प्रत्येकं वर्तमानस्य रूपत्व-रसत्व-पृथिवीत्व-जलत्वो-त्क्षेपणत्वापक्षेपणत्वादिलक्षणविशेषस्योभयथा=तुल्यजातीयवृत्तिधर्मेण गुणत्वेनार्थान्तरभूतवृत्तिधर्मेण द्रव्यत्वेन कर्मत्वेन च सह दृष्टत्वात्=दर्शनात् शब्दवृत्तिश्रावणत्वविशेषस्योपलब्धेर्द्रव्याश्रयित्वादि-

विशेषान्तरस्य चानुपलब्धेर्गुणत्वद्रव्यत्वादिसामान्यविशेषस्य स्मृतेश्च शब्दे=शब्दधर्मिणि संशयः=किमयं गुणो वा द्रव्यं वा कर्म वेति संशय इत्यर्थः।

रूपादिगुणेष्वेकैकशो वर्तमानो रूपत्वरसत्वादिलक्षणो विशेषो गुणत्वसमानाधिकरणः, पृथिव्यादिद्रव्येष्वेकैकशो वर्तमानः पृथिवीत्वजलत्वतेजस्त्वादिलक्षणो विशेषो द्रव्यत्वसमानाधिकरणः, उत्क्षेपणादिकर्मस्वेकैकशो वर्तमान उत्क्षेपणत्वापक्षेपणत्वादिलक्षणो विशेषः कर्मत्वसमानाधिकरणो दृष्टः। **किमुक्तं?** विशेषो गुणत्वद्रव्यत्वकर्मत्वसमानाधिकरणो दृष्ट इति। शब्दे श्रावणत्वमपि विशेषः। तस्य विशेषत्वेन तत्र प्रत्यक्षाद्, द्रव्याश्रयित्वादिविशेषस्य च प्रत्यक्षाभावाद्, विशेषसमानाधिकरणानां गुणत्वद्रव्यत्वकर्मत्वानां च स्मृतेर्भवति संशयः—"किमयं गुणो वा स्याद्, द्रव्यं वा स्यात्, कर्म वा स्याच्छब्दः" इति भावः।

तत्र साधारणधर्मोपलम्भवदसाधारणधर्मोपलम्भोऽपि संशायक इति गौतमीयाः। तेषां श्रावणत्वत्वेन श्रावणत्वं विशेषः शब्दे द्रव्यादिकोटिकसंशयस्य हेतुः। वैशेषिकाणां च विशेषत्वेन सामान्यधर्मेण। तेषां सामान्यधर्मोपलम्भस्यैव संशायकत्वादिति विशेषः।

शब्दे सत्त्वकारणवत्त्वादिकं दृश्यते। सामान्यविशेषसमवायेषु च तन्नास्ति। निःसामान्यत्वात्, व्यवहारभूमौ नित्यत्वाच्च। अतो न तत्र तत्कोटिकः संशय इति द्रष्टव्यम्।

सूत्रे विशेषशब्दः शब्दवर्तिनं कञ्चिद् धर्मविशेषमाह, न त्वसाधारणं धर्मम्। तस्य गुणत्वद्रव्यत्वादिसामानाधिकरण्याभावेन तत्स्मारकत्वानुपपत्तौ संशयानुपपत्तेः। विशेषस्य=शब्दवर्तिनः संयोगजत्वस्य धर्मविशेषस्य तुल्यजातीयेषु=समानप्रकारकेषु गुणेषु, अर्थान्तरभूतेषु=भिन्नप्रकारकेषु द्रव्येषु कर्मसु चोभयथादृष्टत्वात्=तुल्यजातीयेषु गुणत्वेन सह अर्थान्तरभूतेषु च द्रव्यत्वेन कर्मत्वेन च सह दर्शनाच्छब्दे=शब्दधर्मिणि संशयः="किमयं गुणो वा स्याद्द्रव्य वा स्यात्कर्म वा" स्यादिति संशय इत्यर्थः। संयोगजत्वं गुणे द्रव्ये कर्मणि च दृष्टं, शब्दे तस्य प्रत्यक्षाद् द्रव्याश्रयित्वादिविशेषस्याप्रत्य-

क्षाद्गुणत्वद्रव्यत्वादिविशेषस्य स्मृतेश्च संशयः—"किमयं गुणो वा, द्रव्यं वा, कर्म वा, शब्दः" इति भाव इति तु नितान्तस्थवीयानर्थः ।

विशेषस्य=शब्दत्वश्रोत्रग्राह्यत्वलक्षणविशेषस्य व्यावृत्तेस्तुल्यजातीयेषु=त्रयोविंशतिगुणेष्वर्थान्तरभूतेषु=द्रव्येषु कर्मसु चोभयथा=उभयत्र दृष्टत्वात्=दर्शनात् शब्द· **किं** गुणो, द्रव्यं, कर्म, वेति संशयः । तत्र **यद्यपि** शब्दत्वं श्रोत्रग्राह्यत्वं चासाधारणो धर्मः । **तथापि** व्यावृत्तिरस्य सजातीयासजातीयसाधारणीति व्यावृत्तेः साधारणस्यैव धर्मस्य संशयजनकत्वमिति शङ्करमिश्रः ॥ २२ ॥

**किमयं** गुणो वा, द्रव्यं वा, कर्म वा, शब्द इति संशय्य परिशेषाद् गुणत्वं तस्य निर्णेष्यमाणः पूर्वं तावद् द्रव्यत्वं प्रतिषेधति—

**"एकद्रव्यत्वान्न द्रव्यम् ॥ २३ ॥**

शब्द इत्यनुवर्तते । शब्दो द्रव्यं=द्रव्यत्वजातिमान् न=न भवति । **कुतः?** एकद्रव्यत्वात्=एकं द्रव्यं समवायिकारणं यस्य स तथोक्तः, तस्य भावस्तत्त्वं, तस्मात्=एकद्रव्यसमवायिकारणकत्वादित्यर्थः ।

यत्कार्य्यद्रव्यं, तत्किमप्येकद्रव्यं न भवति । शब्दश्च व्योमैकाश्रितत्वादेकद्रव्यः । तस्मान्न द्रव्यमिति भावः ॥ २३ ॥

**नन्वस्तु** तर्हि कर्मैव शब्दः, तस्यैकद्रव्यत्वात्, तत्राह—

**"नापि कर्माचाक्षुषत्वात् ॥ २४ ॥**

शब्द इत्यनुवर्तते । **नापि** शब्दः कर्म=कर्मत्वजातिमान् संभवति । **कुतः?** अचाक्षुषत्वात्=चाक्षुषप्रत्यक्षागोचरत्वात्, गन्धादिवदित्यर्थः ।

**यद्यपि** शब्दवदेकद्रव्यं कर्म **तथापि** तच्चक्षुषा गृह्यते । शब्दस्तु तेन न गृह्यते, **चेत्सोऽपि** कर्म स्यात्, **तदावश्यं** तेन गृह्येत । न च गृह्यते । तस्मान्नासौ कर्मेति भावः ।

शब्दत्वं न कर्मवृत्ति, अचाक्षुषवृत्तिजातित्वात्, रसत्वादिवदिति शब्दस्याकर्मत्वे नव्यानां प्रयोगः । कर्म न समानजातीयं कर्मारभते, शब्दस्तु तद्विपरीतः समानजातीयं शब्दमारभते, चेत्कर्म भवेत्, न जात्वारभेत, आरम्भणाच्च नासौ कर्म । **यथा** न कर्म, न द्रव्यं, **तथा** न सामान्यं,

न समवायो, न विशेषोऽपि । जातिमत्त्वादप्रसक्तेः । परिशेषाद्गुण इति निर्णयः ॥ २४ ॥

**ननु यथा** हि कर्माशु विनश्यति, **तथैव** शब्द इति **कथं** न कर्म स्यात् ? तत्राह—

**"गुणस्य सतोऽपवर्गः कर्मभिः साधर्म्यम् ॥ २५ ॥**

गुणस्य=प्रसक्तयोर्द्रव्यकर्मणोः प्रतिषेधेऽन्यत्र सामान्यादावप्रसङ्गेन पारिशेष्याद् गुणत्वजातिमतः सतः=सिध्यतः शब्दस्य योऽयमपवर्गः=आशुविनाशः, स कर्मभिः=कर्मत्वजातिमद्भिः साधर्म्यं=समानो धर्म इत्यर्थः ।

आशुविनाशित्वं हि न कर्मत्वव्याप्यम् । तस्य सर्वसम्प्रतिपन्नद्वित्वादिसंख्या-ज्ञान-सुखदुःखादिगुणेऽपि दर्शनात् । अतो न तेन शब्दस्य कर्मत्वं सिध्यति, किन्तु कर्मभिः साधर्म्यं=समानधर्मतामात्रमिति भावः ।

तत्र चतुःक्षणावस्थायि सर्वं कर्म, पञ्चमक्षणे विनश्यति । गुरुत्वप्रयत्नसंयोगेभ्यः पूर्वं द्रव्ये कर्म, ततो विभागः, ततः पूर्वसंयोगनाशः, ततः उत्तरसंयोगः, ततः कर्मनाश इति प्रक्रियाऽभ्युपगमात् । द्वित्वप्रभृतिसंख्यादिनिमित्तमपेक्षाबुद्धिस्तु त्रिक्षणावस्थायिनी चतुर्थक्षणे विनश्यति । पूर्वमयमेकोऽयमेक इत्याकाराऽपेक्षाबुद्धिः, ततो द्वित्वोत्पत्तिः, ततो द्वित्वत्वनिर्विकल्पज्ञानं, ततो द्वित्वत्वविशिष्टस्य 'इमौ द्वौ' इति सविकल्पकं प्रत्यक्षम्, अपेक्षाबुद्धिनाशश्च, ततो द्वित्वनाश इति सिद्धान्तात् । ज्ञानशब्दौ च द्विक्षणावस्थायिनौ तृतीयक्षणे विनश्यत इति विवेकः॥२५॥

**ननु** भवतु शब्दो गुणः, **तथाप्या**काशलिङ्गं न संभवति, तस्य नित्यत्वेन तत्कार्य्यत्वाभावात्, कदाचित्तदनुपलम्भस्तु व्यञ्जकाभावप्रयुक्तो, न कार्य्यत्वप्रयुक्तः, तत्राह—

**"सतो लिङ्गाभावात् ॥ २६ ॥**

शब्दो न नित्यः, **कुतः**? सतः=नित्यत्वं सत्त्वं, नित्यस्य तस्य लिङ्गाभावात्—साधकलिङ्गानुपलम्भादित्यर्थः ।

तन्नित्यतासाधकलिङ्गानुपलब्धेरिति भावः ॥ २६ ॥

**ननु** लिङ्गाभावेऽपि नित्यः किं न स्यात्? तत्राह—

**"नित्यवैधर्म्यात् ॥ २७ ॥**

शब्दो न नित्यः, **कुतः**? नित्यवैधर्म्यात्=नित्यस्यानुत्पादविनाशौ धर्मौ, तद्विरुद्धौ चोत्पादविनाशौ, तद्धर्मकत्वादित्यर्थः ॥ २७ ॥

**ननु** लिङ्गाभावनित्यवैधर्म्याभ्यां नित्यः शब्दो मा सैत्सीत, अनित्योऽपि कुतः? सिध्येत्, न हि नित्यत्वप्रतिषेधमात्रेण कश्चिदनित्यः सेद्धुमर्हति, तत्राह—

**"अनित्यश्चायं कारणतः ॥ २८ ॥**

चकारेणानित्यत्वसाधनोपक्रमः सूच्यते। अनित्यश्चायं शब्दः कारणतः=कारणवत्त्वहेतुतः सिध्यतीत्यर्थः।

शब्दः अनित्यः, कारणवत्त्वाद्, घटादिवदिति भावः ॥ २८ ॥

**ननु** स्वरूपासिद्धो हेतुः, शब्दस्य कारणवत्त्वासिद्धेः, तत्राह—

**"न चासिद्धं विकारात् ॥ २९ ॥**

असिद्धं=शब्दानित्यत्वसाधकं कारणवत्त्वलिङ्गं स्वरूपासिद्धं न च=नैव मन्तव्यम्। कुतः? विकारात्=विकारित्वात्–कार्य्यत्वात् तस्य तत्सिद्धेरित्यर्थः।

शब्दः, कारणवान्, कार्य्यत्वाद्, घटवदिति भावः ॥ २९ ॥

**ननु** तदा हि शब्दः, कारणवान् भवेत्, चेत्कारणकलापेन निष्पद्येत, न च निष्पद्यते, अपि चाभिव्यज्यते, तत्राह—

**"अभिव्यक्तौ दोषात् ॥ ३० ॥**

नाभिव्यज्यते शब्द इति प्रतिज्ञाशेषः। तत्र हेतुः 'अभिव्यक्तौ दोषात्=समानेन्द्रियग्राह्याणां समनियतानामेकव्यञ्जकाभिव्यङ्ग्यत्वनियमेनैकवर्णाभिव्यक्तौ सत्यां यावद्वर्णाभिव्यक्तिलक्षणदोषप्रसङ्गादित्यर्थः।

घटपटादिगताः रूपरसगन्धस्पर्शास्तु न समानेन्द्रियग्राह्याः, सत्त्वमनुष्यत्वब्राह्मणत्वादयश्च न समनियता इति तत्र व्यञ्जकभेदाभ्युपगमेऽपि न वर्णेषु तद्भेदोऽभ्युपगन्तुं शक्यते, समानेन्द्रियग्राह्याणां समनियतानां घटपटादिसंख्यापरिमाणादीनामेकेनालोकसंयोगेनाभिव्यञ्जकेनैकाभिव्यक्तौ नि-

खिलाभिव्यक्तिदर्शनात्, वर्णा अपि समानेन्द्रियग्राह्याः, समनियताश्च। तस्मादेकाभिव्यक्तौ सर्वाभिव्यक्तिप्रसङ्गो दोषो ज्यायानिति भावः ॥ ३० ॥

ननु कस्मात्तर्हि कारणकलापात् शब्दोऽयं व्योम्नि निष्पद्यते ? तत्राह—

**"संयोगाद् विभागाच्छब्दाच्च शब्दनिष्पत्तिः ॥ ३१ ॥**

संयोगात्=भेरीदण्डादिसंयोगात्, विभागात्=वेणुपर्वादिविभागात्, शब्दाच्च=वीचीसन्तानन्यायेन शब्दाच्च, शब्दनिष्पत्तिः=व्योम्नि शब्दसामान्यस्योत्पत्तिर्भवतीत्यर्थः ।

तत्राद्यः शब्दः संयोगाद्विभागाच्च जायते । तत्पूर्वकस्तु शब्दात् । सोऽयं शब्दो द्विविधः—वर्णात्मको, ध्वन्यात्मकश्च । अकारादिर्वर्णात्मकः, भेर्यादिनिमित्तो ध्वन्यात्मकः । वर्णात्मकस्य सयोगाच्छब्दाच्चोत्पत्तिः । ध्वन्यात्मकस्य च संयोगाद्विभागाच्छब्दाच्चोत्पत्तिः । वर्णात्मकं शब्दं प्रति कण्ठादिस्थानस्य वायुनाऽभिघाताख्यः सयोगो निमित्तकारणं, वायुनाऽभिहन्यमानस्य तस्यैवाकाशेन संयोगोऽसमवायिकारणं । पूर्वानुभूतवर्णस्मृत्यपेक्षादात्ममनसोः सयोगात्पूर्वं वर्णोच्चारणेच्छा, तदनु प्रयत्नः, तमपेक्षमाणादात्मवायुसंयोगाच्च कोष्ठचे वायौ कर्म, तेन चोर्ध्वं गच्छन् वायुः पुनः कण्ठादीनभिहन्ति, तेनाभिहताश्चाकाशेन ते सयुज्यन्ते, ततश्च वर्णोत्पत्तिरिति प्रक्रियाभ्युपगमात् । ध्वन्यात्मकं शब्दं प्रति भेरीदण्डसंयोगो निमित्तकारणं, भेर्याकाशसंयोगोऽसमवायिकारणम् । एव शङ्खमुखसंयोगः, शङ्खाकाशसंयोगश्च शङ्खशब्दं प्रति निमित्तकारणमसमवायिकारणञ्चोन्नेयम् । एवं विभागज शब्द प्रति वेणुपर्वविभागो निमित्तकारणं, वेण्वाकाशविभागोऽसमवायिकारणम् । यत्र तु दूरप्रदेशे संयोगविभागाभ्यामुत्पन्नस्य शब्दस्य वीचीसन्तानन्यायेन श्रोत्रप्रदेशमागतस्य ग्रहणं, तत्र शब्दाच्छब्दोत्पत्तिः । कर्णशष्कुल्यवच्छिन्नस्याकाशस्य श्रोत्रत्वेन निष्क्रियतया शब्दप्रदेशे गमनस्य, शब्दस्य च गुणत्वेन क्रियाऽभावाच्छ्रोत्रप्रदेशागमनस्यासंभवात्, अप्राप्यकारित्वस्य चेन्द्रियाणामनभ्युपगमात्, तद्ग्रहणान्यथानुपपत्त्या वीचीसन्तानवच्छब्दसन्तानसिद्धिः । अत्र पवनादिक निमित्तकारणं, पूर्वपूर्वशब्दोऽसमवायिकारणम् । यद्यदवच्छेदेन शब्दो निष्पद्यते,

तत्तदवच्छिन्नमाकाशन्तु सर्वत्र समवायिकारणम्। द्रव्यस्यैव समवायिकारणतानियमादिति विवेकः॥ ३१॥

**ननु** भवतु संयोगादितः शब्दनिष्पत्तिः, तदनित्यत्वे किमायातं? तत्राह—

**"लिङ्गाच्चानित्यः शब्दः॥ ३२॥**

लिङ्गाच्च=उत्पत्तिमत्त्वलिङ्गाच्च सिद्धोऽनित्यः शब्द इत्यायातमित्यर्थः।

अनित्यत्वे हेत्वन्तरं समुच्चिनोति—"लिङ्गाच्चानित्यः शब्दः=वर्णात्मकः शब्दः, अनित्यः, जातिमत्त्वे सति श्रोत्रग्राह्यत्वात्, वीणादिध्वनिवदित्यर्थ इति शङ्करमिश्रः॥ ३२॥

पूर्वपक्षयति—

**"द्वयोस्तु प्रवृत्त्योरभावात्॥ ३३॥**

तुशब्दः पूर्वपक्षमभिव्यनक्ति। शब्दोऽनित्य इत्यनुवर्तते। पूर्वपक्षसामर्थ्यान्न पदलाभः। नानित्यः शब्दः सम्भवति। **कुतः**? तथा सति द्वयोः=अध्येत्रध्यापकयोरुभयोः प्रवृत्त्योः=अध्ययनाध्यापनप्रवृत्त्योरभावात्=अभावप्रसङ्गादित्यर्थः।

गुरुर्हि शिष्यं यं शब्दमध्यापयति, शिष्यस्तमेवाधीते। न च गुरोरध्यापनं शिष्यस्य चाध्ययनं शब्दस्य युगपत्सम्भवतः। क्रमभावित्वात्। न ह्यनित्यः शब्दोऽध्यापनकाले तिष्ठन्नप्यध्ययनकाले स्थातुमर्हति। नित्यत्वप्रसङ्गात्। अनित्यश्चाभ्युपगम्यते। तस्माद् यं शब्दमध्यापको गुरुरध्येतारमध्यापयेत्, कथं तमेवाध्येता शिष्योऽध्येतुं पारयेत्। तस्यानित्यत्वेन तदानीमभावात्। तदध्ययनाभावे च प्रसक्तः शब्दस्यानित्यत्वे द्वयोः प्रवृत्त्योरभाव इति भावः॥ ३३॥

**ननु कुतः** पुनर्नानित्यः शब्दः? तत्राह—

**"प्रथमाशब्दात्॥ ३४॥**

**"तासां त्रिः प्रथमामन्वाह त्रिरुत्तमाम्"** (ऐतरेय ब्रा० २ ध्या० ३ ख०) इत्यादौ प्रथमायाः उत्तमायाश्च सामिधेन्योस्त्रिरुच्चारणस्य शब्दनाम्नानित्यः शब्दः सम्भवतीति पूर्ववदित्यर्थः।

अनित्यः शब्दः क्षणद्वयादूर्ध्वं नावतिष्ठते, तथासतश्च त्रिरुच्चारणं कथमपि न युज्यते, त्रिरुच्चारणं च ब्राह्मणवाक्येनोपदिश्यते, ततोऽनुमीयते–नानित्यः शब्दोऽपि च नित्य इति भावः ।

तत्र **"प्रवो वाजा अभिद्यवो हविष्मन्तो घृताच्या देवाञ्जिगाति सुम्नयुः"** (ऋग्वे० मण्ड० ३ सू० २७ मं० १) इत्याद्याः एकादशसंख्याका ऋचो वह्निसमिन्धनहेतुत्वात्सामिधेन्य इत्युच्यन्ते इति द्रष्टव्यम् ॥ ३४ ॥

तत्रैव हेत्वन्तरं समुच्चिनोति—

**"सम्प्रतिपत्तिभावाच्च ॥ ३५ ॥**

सम्यग्=अभेदेन प्रतिपत्तिः=ज्ञप्तिः=सम्प्रतिपत्तिः प्रत्यभिज्ञा, तस्याः सद्भावः=भावः, तस्माच्च नानित्यः शब्द इत्यर्थः ।

यमेवानुवाकं चैत्रोऽयमध्यैत, तमेव मैत्रोऽयमधीते, यदेव वाक्यं राम परुत् परारि वा त्वमभ्यधत्थाः, तदेवेदानीमप्यभिधत्से, विष्णुमित्रो ह्यो यां गाथामब्रूत, तामेव भ्रातस्त्वमद्य ब्रूषे, सोऽयमकारः सोऽयं ककार इत्यादिका भवति तावत्सम्प्रतिपत्तिः । न च सा शब्दस्यानित्यत्वे सम्भवति । तस्मान्नानित्यः शब्द इति भावः ॥ ३५ ॥

पूर्वपक्षं निरस्यति—

**"सन्दिग्धाः ॥ ३६ ॥**

नामी त्रयोऽपि हेतवः शब्दस्यानित्यत्वाभावं साधयितुमुपन्यस्ताः पर्य्याप्ताः । **कुतः?** यतः सन्दिग्धाः=साध्याभाववद्वृत्तित्वं सन्देहः, तद्युक्ताः=देवदत्तो मैत्रं नृत्यमध्यापयति, मैत्रस्तदेव नृत्यमधीते, द्विरनृत्यत्, त्रिरनृत्यत्, विष्णुमित्रः परुत् परारि च यदेव नृत्यमकार्षीत्, तदेवेदानीं भद्रसेनः करोति, तदेवेदं नृत्यं यत्पूर्वमद्राक्षमित्यादिके लोकसिद्धे क्षणिके नृत्यकर्मण्यनैकान्ताः=व्यभिचारिणः सन्तीत्यर्थः ।

निश्चितो हेतुः स्वसाध्यं साधयितुं क्षमते, न सन्दिग्धः । भग्नव्याप्तिकत्वात् । सन्दिग्धाश्चेमे भवदुपन्यस्तास्त्रयोऽपि हेतवः । साध्याभाववति नृत्ये कर्मणि वर्तमानत्वात् । अतस्ते न स्वसाध्यसाधनक्षमा इति भावः ।

तत्र येषामसौ क्षणिकः शब्दः, तेषां तत्र प्रतीयमानं तारत्वादिकं सांसिद्धिकं, येषां चाक्षणिकः, तेषां ध्वनिनिमित्तकत्वान्नैमित्तिकमिति विशेषः ॥ ३६ ॥

**ननु** शब्दस्यानित्यतया प्रतिवर्णं वहुत्वे "पञ्चाशद्वर्णाश्चतुर्दशाचः" इत्यादिका शिक्षोक्ता नियता संख्या **कथमुपपत्स्यते**? तत्राह—

**"सति बहुत्वे संख्याभावः सामान्यतः ॥ ३७ ॥**

वहुत्वे=शब्दस्यानित्यत्वात्प्रतिवर्णं नानात्वे सति=सत्यपि संख्याभावः=शिक्षोक्तनियतसंख्यायाः सद्भाव सामान्यतः=वर्णवृत्तिसामान्यविशेषतः उपपद्यते इत्यर्थः ।

**यद्यपि** शब्दस्यानित्यत्वादकारककारादयो वर्णा नाना सम्पद्यन्ते । **तथापि** ते न जात्वत्वकत्वादिकं सामान्यमतिशेरते । तस्मात्सामान्यविशेषनिबन्धनस्तत्र संख्यानियमो न व्यक्तिनिबन्धन इति भाव ॥ ३७ ॥

**क्षित्यञ्ज्योतिस्समीराणां लक्षणस्य यथोचितम् ।**
**तथा दिक्कालशब्दानां वृत्तमस्मिन् परीक्षणम् ॥ १ ॥**

**इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृतायां वैशेषिकसूत्रवैदिकवृत्तौ द्वितीयाध्यायस्य द्वितीयमाह्निकम् ।**

**समाप्तश्चायं वाह्यद्रव्याध्यायो द्वितीयः ।**

# अथ तृतीयोऽध्यायः ।

## आद्यमाह्निकम् ।

पृथिव्यादीनि बहिर्द्रव्याणि सप्त लक्षणतः स्वरूपतश्च परीक्षितानि । परिशिष्टमात्मा, मन, इत्याभ्यन्तरं द्रव्यद्वयं परीक्षणीयमवशिष्यते । तत्रोद्देशक्रमेणात्मानं परीक्षिष्यमाणः पूर्वं तावत्तत्सिद्धौ हेतुं प्रदर्शयितुं पीठमारचयति—

**"प्रसिद्धा इन्द्रियार्थाः ॥ १ ॥**

इन्द्रियार्थाः=इन्द्रियाणि चार्थाश्च ते तथा=घ्राणरसनचक्षुस्त्वक्छ्रोत्राणि पञ्चेन्द्रियाणि, गन्धरसरूपस्पर्शशब्दाश्च पञ्च तदर्थाः प्रसिद्धाः=प्रकृष्टा ज्ञप्तिः प्रसिद्धिः तद्विषयाः=प्रकर्षेण ज्ञाताः सन्तीत्यर्थः ।

घ्राणादीनीन्द्रियाणि गन्धादिग्राहकतया प्रसिद्धानि, गन्धादयश्च गुणास्तदर्थतया प्रसिद्धाः विद्यन्ते—को नु नाम न जानाति. घ्राणमिन्द्रियं गन्धं गृह्णाति, रसनं रसं, चक्षुः रूपं, त्वक् स्पर्शं, श्रोत्रं शब्दमिति । तस्मान्न तत्साधनापेक्षेति भावः ॥ १ ॥

**नन्विन्द्रियार्थाः प्रसिद्धाः सन्तु, किं तेन, तत्राह—**

**"इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्योऽर्थान्तरस्य हेतुः॥२॥**

इन्द्रियार्थप्रसिद्धिः=इन्द्रियेषु घ्राणादिषु, तदर्थेषु च गन्धादिषु प्रसिद्धेषु येयं प्रसिद्धिः=घ्राणमिदं, रसनमिद, गन्धोऽयं, रसोऽयमित्यादिकानुभूतिः, सा चेन्द्रियार्थेभ्यः=इन्द्रियेभ्योऽर्थेभ्यश्चार्थान्तरस्य=अन्यस्य=प्रसाधकस्यार्थस्य=आत्मपदार्थस्य हेतुः= अपदेशः=साधकं लिङ्गमित्यर्थ. ।

प्रसिद्धिः, क्वचिदाश्रिता, गुणत्वाद्, शब्दादिवत्, क्रियात्वात्, छिदादिक्रियावत्, यस्तावत्प्रसिद्धेराश्रयः प्रसाधक', स आत्मेति भाव' ॥ २ ॥

**ननु** यस्यार्थान्तरस्य हेतुरिन्द्रियार्थप्रसिद्धिरभिधीयते, तन्नात्मलक्षणं किञ्चिद्द्रव्यान्तरम्, अपि चैतच्छरीरमेव, प्रसिद्धेस्तत्कार्य्यत्वाद् रूपादिवत्तदाश्रयत्वोपपत्ते', तत्राह—

**"सोऽनपदेशः ॥ ३ ॥**

सः=शरीरस्य ज्ञानाश्रयत्वसाधकः "तत्कार्य्यत्वात्" इति हेतुरनपदेशः=

“**हेतुरपदेशो लिङ्गं प्रमाणं करणमित्यनर्थान्तरम्**”(९।२।४) इति वक्ष्यमाणसूत्रादपदेशो हेतु', तद्भिन्नः=अहेतुः=शरीरानाश्रिते घटपटादौ तत्कार्य्येऽनैकान्तिकत्वाद्धेत्वाभास इत्यर्थः।

**एतेन** प्रसिद्धेरिन्द्रियाश्रयत्वमपि तत्कार्य्यत्वाद् निरस्तं **वेदितव्यम्**। प्रदीपकार्य्यत्वेऽपि घटपटादिप्रसिद्धेस्तदनाश्रितत्वात्। **यथा** च हेत्वाभासः साध्यसाधको न भवति, **तथाग्रे** सुव्यक्तम् ॥ ३ ॥

**ननु** न तत्कार्य्यत्वमात्रं हेतुः, अपि च तत्समवेतत्वे सति तत्कार्य्यत्वम्, अतोऽनैकान्तिकत्वाभावाद् रूपादिवच्छरीरस्यैव विशेषगुणो ज्ञानं सेत्स्यति नात्मनः, तत्राह—

“**कारणाज्ञानात्** ॥ ४ ॥

ज्ञानं, शरीरसमवेतत्वे सति शरीरकार्य्यं नोपपद्यते। कुतः? कारणाज्ञानात्=शरीरकारणेषु भूतसूक्ष्मेषु ज्ञानाभावादित्यर्थः।

जन्यं तावच्छरीरं, तत्र सर्वे समवेताः गुणाः कारणगुणपूर्वका एव वक्तव्या' “**द्रव्याणिद्रव्यान्तरमारभन्ते, गुणाश्च गुणान्तरम्**” (१।१।१०) इति सूत्रात्। न च तदारम्भकारणेषु भूतसूक्ष्मेषु ज्ञानं विद्यते। येन तत्कार्य्ये शरीरेऽपि तत्कार्य्यं भवत्समवेयात्। अतस्तत्समवेतत्वे सति तत्कार्य्यत्वस्य हेतोरसिद्धेर्न तद्विशेषगुणो ज्ञानं सिध्यतीति भावः।

तत्र पूर्वत्र हेतोर्व्यभिचारः प्रदर्शितः, अत्र तु स्वरूपासिद्धिरिति विवेकः ॥ ४ ॥

**ननु** शरीरारम्भकभूतसूक्ष्मेष्वपि ज्ञानमभ्युपगम्यते, अतो न स्वरूपासिद्धो हेतुः, तत्राह—

“**कार्य्येषु ज्ञानात्** ॥ ५ ॥

कार्य्येषु=सर्वेषु घटपटादिषु भूतसूक्ष्मकार्य्येषु ज्ञानात्=ज्ञानप्रसङ्गादित्यर्थः।

**यथा** हि भूतसूक्ष्माणां कार्य्यं शरीरं, **तथैव** घटपटादयोऽपि। तत्र चेज्ज्ञानमभ्युपगम्येत, **तदा** शरीरवत्तेष्वपि तत्प्रसज्येतेति भाव' ॥ ५

**ननु** तत्रापि ज्ञानं विद्यते, कृतमतिप्रसक्त्या, तत्राह—

**"अज्ञानाच्च ॥ ६ ॥**

कार्य्येषु इत्यनुवर्तते । भूतसूक्ष्मेषु ज्ञानाभावसाधनाय सूत्रद्वयेन हेतुद्वयोपन्यास इति चकारेण सूत्रयति । भूतसूक्ष्मकार्य्येषु घटपटादिषु केनापि प्रमाणेन ज्ञानस्योपलम्भाभावाच्च न तत्कारणेषु भूतसूक्ष्मेषु ज्ञानमभ्युपगन्तुं शक्यते इत्यर्थः ।

भूतसूक्ष्मेषु **चे**ज्ज्ञानं विद्येत, **तदा**वश्यं तत्कार्य्येष्वप्युपलभ्येत । कार्य्यगुणानां कारणगुणपूर्वकत्वनियमात् । न च तत्र केनापि प्रमाणेन ज्ञानमुपलभ्यते । तस्मादनुमीयते नास्ति तेषु ज्ञानम् । अत एव चायुक्तस्तत्र तदभ्युपगम इति भावः ॥ ६ ॥

**ननु** मा सैत्सीच्छरीराश्रयं ज्ञानम्, आत्माश्रयमपि न सेद्धुमर्हति, तस्य भिन्नत्वेनाऽऽत्मना तादात्म्याभावाद्धेतुत्वानुपपत्तेः, तत्राह—

**"अन्यदेव हेतुरित्यनपदेशः ॥ ७ ॥**

अन्यदेव=साध्याद् भिन्न एव=साध्यप्रतियोगिकभेदाश्रय एव हेतुः=अपदेशो भवति, न तदात्मभूतः, साध्याविशेषप्रसङ्गात् इति=अतोऽनपदेशः=तादात्म्यघटितोऽपदेशोऽनपदेशः= अहेतुरित्यर्थः ।

यस्य हि येन तादात्म्यम्, उत्पत्तिर्वा यस्य यस्मात्, स एव तस्य हेतुर्भवति नान्यः कश्चिदिति सौगताः आमनन्ति । तत्र वैशेषिकास्तावदुत्पत्तिर्यस्य यस्मात्, स तस्य हेतुरिति स्वीकुर्वन्तोऽपि यस्य येन तादात्म्यं स एव तस्य हेतुरिति शेषं नियमं नाभ्युपयन्ति । तादात्म्यघटितस्य हेतुत्वे व्यभिचारात् । तद्विरहिणां च बहूनां हेतुत्वदर्शनात् । तदेतदग्रे विस्पष्टम् । अतस्तादात्म्यस्य हेतुघटकत्वानभ्युपगमेन ज्ञानस्यात्मना तादात्म्याभावेऽपि न हेतुत्वानुपपत्तिरिति भावः ॥ ७ ॥

**ननु चे**दन्यदेव हेतुर्न तादात्म्यघटित, **तदा**ऽन्यत्वाविशेषाद् वह्नेरिव रासभस्यापि धूमो हेतुर्भवेत्, तत्राह—

**"अर्थान्तरं ह्यर्थान्तरस्यानपदेशः ॥ ८ ॥**

अर्थान्तरं हि=सर्वथा साध्यादन्योऽप्यर्थान्तरस्य=स्वसादन्यस्य साध्यस्यानपदेशः=अपदेशो न भवतीत्यर्थः ।

**इदमत्र बोध्यं**—यस्य हि येन तादात्म्यं, स तस्य हेतुरिति नायं नियमः । वृक्षोऽयं शिंशपा, शिशपेयं वृक्ष इति वृक्षत्वशिशपात्वयोस्तादात्म्ये समानेऽपि वृक्षत्वस्य शिंशपात्वाहेतुत्वात् । नापि यस्य यत्कार्य्यं, तस्य तल्लिङ्गमिति नियमः । धूमवर्तिपार्थिवत्वस्य वह्निकार्य्यत्वेऽपि धूमवत्त्वदहेतुत्वात् । नाप्यर्थान्तरमर्थान्तरस्य हेतुरिति नियमः । धूमस्यार्थान्तरत्वेऽपि रासभादिहेतुत्वाभावात् । किन्तु वस्तुस्वभावाल् यो हि येन प्रतिबद्धः सन् तद्भावे भवति, तदभावे च न भवति, स एव तस्य हेतुरिति सार्वत्रिको नियमः । न तत्र कार्य्यत्वकारणत्वसंयोगसमवायतादात्म्यादिप्रवेशः । तावतैव सर्वत्र निर्वाहसंभवे तत्प्रवेशस्याकिञ्चित्करत्वात् । अत एवोक्तं प्रशस्तपादैः सङ्ग्रहे ।

**"यद् अनुमेयेन सम्बद्धं प्रसिद्धं च तदन्विते ।**
**तदभावे च नास्त्येव तल्लिङ्गमनुमापकम्"** ॥ १ ॥ इति ।

तथा च न कुत्रापि कश्चिद्दोष इति ॥ ८ ॥

**ननु** भवतु साध्यादन्यदेव वस्तुस्वभावप्रतिबद्धं लिङ्गं, **तथापि** परिगणनाभावे कथं तत्परिज्ञेयं, तत्राह—

**"संयोगि समवाय्येकार्थसमवायि विरोधि च ॥ ९ ॥**

लिङ्गमिति शेषः । कार्य्यं, कारणं, देशाविनाभूतं, कालाविनाभूतमिति चतुष्टयं चकारेण समुच्चिनोति । संयोग्यादिकं प्रायेण लिङ्गं भवतीत्यर्थः ।

**तत्र** यत्र कार्य्येण धूमालोकादिना हुतभुगादिकारणानुमानं तत्र **कार्य्यं** लिङ्गम् । यत्र च यथाविधि कृतेन वैदिककर्मणा, मेघोन्नत्यादिना च कारणेन भाविसुखविशेषवर्षादिकार्य्यानुमानं, तत्र **कारणं** लिङ्गम् । यत्र च करणेन कर्तुरनुमानं, शरीरं, त्वग्वत्, शरीरत्वात्; अयं देशः, सारथिमान्, विलक्षणगतिमद्रथादित्येवं संयोगिना वा शरीरादिना त्वक्सारथ्यादेरनुमानं, तत्र **संयोगि** लिङ्गम् । यत्र च गुणादिना तदाश्रयविशेषस्यानुमानं, तत्र **समवायि** लिङ्गं । यत्र चोमिति श्रावयताऽध्वर्युणा व्यवहितस्य होतुरनु-

मानं—काश्मीरेषु वा सुवर्णभाण्डागारिकाणां पुरुषाणां यववाटिकासंरक्षणेन यवनालेषु हेमाङ्कुरोद्भेदस्यानुमानं, तत्र **देशाविनाभूतं** लिङ्गम् । यत्र च समुद्रवृद्धिकुमुदविकाशाभ्यां चन्द्रोदयस्य, शरदि वा पयःप्रसादेनागस्त्योदयस्यानुमानं, तत्र **कालाविनाभूतं** लिङ्गम् । **एकार्थसमवायि, विरोधि** च लिङ्गं स्वयं सूत्रकृदुदाहरिष्यतीति लिङ्गोदाहरणविवेकः ।

**यद्यपि** लिङ्गे संयोगादिकं नापेक्षितं, नापि शक्यपरिगणनं लिङ्गम **तथापि** शिष्याणामुदाहरणनिष्ठं कृत्वा किमप्यव्यभिचारि लिङ्गं दर्शनीयमिति सूत्रे सयोग्यादिकमुदाहृतं, न त्वेतावन्त्येव लिङ्गानीति दर्शयितुमिति द्रष्टव्यम् ॥ ९ ॥

एकार्थसमवायिलिङ्गमुदाहरति—

**"कार्य्यं कार्य्यान्तरस्य ॥ १० ॥**

कार्य्यं=रूपं कार्य्यान्तरस्य=स्पर्शस्य, गन्धो वा रसस्यैकार्थसमवायि लिङ्गमित्यर्थः ।

**यथा** कार्य्यं कार्य्ये, **तथा**ऽकार्य्यमप्याकाशादीनामेकत्वमाकाशादीनामेकपृथक्त्वे, परमसहत्त्वे चैकार्थसमवायि लिङ्गम् । एकार्थसमवायित्व चैकस्मिन्नर्थे समवायेन वृत्तिमत्त्वमिति बोद्धव्यम् ॥ १० ॥

विरोधिलिङ्गमुदाहरति—

**"विरोध्यभूतं भूतस्य ॥ ११ ॥**

अभूतम्=अविद्यमानम् **"अभूतं नास्तीत्यनर्थान्तरम्"**(९।१।९) इति वक्ष्यमाणसूत्रात् । वर्षमिति शेषः । भूतस्य=विद्यमानस्य विजातीयमरुदभ्रसंयोगस्य विरोधि=विरोधि लिङ्गमित्यर्थः ।

प्रत्यक्षाप्रत्यक्षसंयोगस्य प्रत्यक्षत्वाभावादनुमेयोऽयं विजातीयमरुदभ्रसंयोग इति ध्येयम् ॥ ११ ॥

विरोधि लिङ्गान्तरमुदाहरति—

**"भूतमभूतस्य ॥ १२ ॥**

विरोधि इत्यनुवर्तते । भूतं=विद्यमानं वर्षमभूतस्य=अविद्यमानस्य विजातीयमरुदभ्रसंयोगस्य विरोधि लिङ्गमित्यर्थः ॥ १२ ॥

विद्यमानं विद्यमानस्य विरोधिनो लिङ्गमुदाहरति—

**"भूतो भूतस्य ॥ १३ ॥**

विरोधि इत्यनुवर्तते । भूतः=विद्यमानो विस्फूर्जन्नहिर्भूतस्य=विद्यमानस्य ज्ञाटान्तरितनकुलस्य विरोधि लिङ्गमित्यर्थः ॥ १३ ॥

**लिङ्गोदाहरणं यद् यद्दिङ्मात्रेणेह दर्शितम् ।**
**तादृक् तादृक्स्वयं कल्प्यं धियोदाहरणान्तरम् ॥ १ ॥**

**ननु** संयोग्यादिनाम्ना लिङ्गानां परिगणनेऽपि वस्तुतो लिङ्गावगमो न भवति, कुत्रचित्तद्भिन्नस्यापि लिङ्गत्वदर्शनात्, तस्मात्कश्चिन्नियमविशेषो वक्तव्यः, येन सुखेन लिङ्गमवगच्छेम, तत्राह—

**"प्रसिद्धिपूर्वकत्वादपदेशस्य ॥ १४ ॥**

अपदेशस्य=लिङ्गस्य प्रसिद्धिपूर्वकत्वात्=व्याप्तिज्ञानमत्र प्रसिद्धिः, तत्पूर्वकत्वनियमाद् यस्य येन व्याप्तिर्ज्ञायेत, तत्तस्य लिङ्गमवगन्तव्यमित्यर्थः ।

वस्तुस्वभावसिद्धः **साध्यसाधनयोरव्यभिचरितसम्बन्धो** हि **व्याप्तिरुच्यते** । यां केचिद**विनाभावसम्बन्धं** वा, यत्रधूमस्तत्राग्निरित्येवमादिरूपं **साहचर्यनियमं** वा सङ्गिरन्ते, यां वा नव्याः **साध्यवत्प्रतियोगिकभेदाधिकरणनिरूपितवृत्तित्वाभावं, हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं** वा निर्ब्रुवते, सा चाव्यभिचारग्रहपुरस्सरं भूयःसहचारदर्शनेन वा, सकृत्सहचारदर्शनेन वा, यस्य येन गृह्येत, तत्तस्यानुमापकं लिङ्गं निश्चेतव्यमिति भावः ।

**यत्र** हि महानसादौ भूयःसहचारदर्शनात् साधनधर्मस्य धूमादेः साधनीयधर्मेण वह्न्यादिना व्याप्तिर्गृह्यते, स च **निश्चितसाध्यवान्=सपक्षः । यत्र** च पर्वतादौ किमिह वह्न्यादिकमस्ति न वेति साधनीयधर्मगोचरः सन्देहः, स **सन्दिग्धसाध्यवान्=पक्षः** । सिषाधयिषाविरहविशिष्टसिद्ध्यभा-

---

१ साधयितुमिच्छा=सिषाधयिषा, तस्याः विरहोऽभावः, तद्विशिष्टा या सिद्धिः=साध्यनिश्चयस्तदभावः—पक्षतेतितदर्थः । तत्र सिषाधयिषोत्तेजिका । तद्विरहविशिष्टा सिद्धिश्चानुमितौ प्रतिबन्धिका । सिद्धौ सत्यामपि सिषाधयिषासत्त्वेऽनुमितिर्जायते । तदर्थं सिषाध-

वः=**पक्षता,** स्वप्रतियोगिविशेष्यतासम्बन्धेन तद्वान् **पक्ष** इति यावत् । **यत्र** च जलह्रदादौ साध्याभावस्तत्पूर्वकः साधनाभावश्च निश्चितः, **स निश्चितसाध्याभाववान्=विपक्ष** इत्युच्यते । **यदा** चायं सपक्षे भूयःसहचारदर्शनेन यत्र धूमस्तत्राग्निरिति प्रसिद्धसमयो दैवादारण्यं गच्छेत्, पर्वतं समालोक्य किमिह वह्निरस्ति न वेति सन्दिहानस्तत्राविच्छिन्नमूलां धूमलेखां पश्यति, **तदा** यत्र धूमस्तत्राग्निरिति व्याप्तिं संस्मरन्नध्यवस्यति—पर्वतोऽयमग्निमानिति । तत्र पक्षे धूम एवायं न बाष्पादिकमित्यसन्दिग्धधूमादिलिङ्गदर्शनमनुमितिकरणत्वाद**नुमानम्** । व्यापारवदसाधारणं कारणं=करणं, तज्जन्यत्वे सति तज्जन्यजनको=व्यापार इति व्याप्तिस्मरणं **व्यापारः** । 'एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकम्' इति न्यायेन लिङ्गदर्शनस्य व्याप्तिस्मरणहेतुत्वात् । साधनीयधर्मस्य वह्न्यादेः प्रमितिर**नुमितिः** । **अथवा** साधनीयधर्मस्य प्रमितिर**नुमानम्** । तत्र गुणदोषमाध्यस्थ्यानुसन्धानम**नुमितिः** ।

**केचित्तु** पूर्वं महानसादौ लिङ्गलिङ्गिनोर्व्याप्तिज्ञानं, तदनु लिङ्गस्य पक्षधर्मतया ज्ञानं, पश्चाद् व्याप्तिस्मरणपूर्वकं परामर्शापरनामधेयं व्याप्यवानयमिति व्याप्तिविशिष्टस्य लिङ्गस्य पक्षवृत्तित्वज्ञानं तृतीयमनुमितिकरणत्वादनुमानम्, फलायोगव्यवच्छिन्नं कारणं च करणमित्याहुः । **नवीनास्तु** व्याप्तिज्ञानं करणं, परामर्शो व्यापारः इति **व्यवस्थापयन्ति** ॥ तच्चैतदनुमानं स्वानुमितिहेतुत्वात्**स्वार्थमि**ति परिभाष्यते । स्वस्यार्थः= साधनीयधर्मानुमितिलक्षणं प्रयोजनं यस्मादिति तद्व्युत्पत्तेः । **यत्तु** परानुमित्यर्थकं पञ्चावयवसाध्यमनुमानं, **किमुक्तम्?** यत् परप्रतिपत्त्यर्थं पञ्चावयवेन वाक्येन स्वनिश्चितार्थप्रतिपादनं, **तत्परार्थमि**ति व्यपदिश्यते । प्रति-

---

यिषाविरहविशिष्टेति सिद्धिविशेषणम् । तथा च विशेषणाभावप्रयुक्तविशिष्टाभावसत्त्वात्पक्षता । सिषाधयिषासत्त्वेऽसत्या च सिद्धौ विशेषणविशेष्योभयाभावप्रयुक्तो विशिष्टाभाव। सिषाधयिषाया अपि अभावे तु विशेष्याभावप्रयुक्तो विशिष्टाभावः । **यत्र तु** सिद्धिरस्ति सिषाधयिषा च नास्ति, **तत्र** न पक्षता । सिषाधयिषाविरहविशिष्टाया. सिद्धेः प्रतिबन्धकत्वात् ।

ज्ञाहेतूदाहरणोपनयनिगमनापरनामानः **प्रतिज्ञापदेशनिदर्शनानुसन्धानप्रत्याम्नायाः** इति पञ्चावयवाः—**तत्र** प्रत्यक्षानुमानागमस्वशास्त्रस्ववचनाविरोधी **साधनीयधर्मविशिष्टस्य धर्मिणो निर्देशः प्रतिज्ञा,** यथा वह्निमान् पर्वत इत्यादिः। अत्राविरोधीति ग्रहणाद् "अनुष्णो वह्निः, घनमम्बरं, ब्राह्मणेन सुरा पेया, वैशेषिकस्य सत्कार्य्यवादः, शब्दो नार्थप्रत्यायक इति यथाक्रमं प्रत्यक्षादिविरोधिनो निर्देशाः प्रतिज्ञाभासत्वान्निरस्ता भवन्ति । १ । **पञ्चम्यन्तं तृतीयान्तं वा लिङ्गवचनमपदेशः,** यथा—धूमाद्, धूमेनेत्यादिः । धूमवत्त्वाद् धूमादिति त्वनर्थान्तरम् । २ । **साध्यसाधनयोरन्वयव्यतिरेकव्याप्तिनिदर्शकं वचनं निदर्शनम्** । तत्रान्वयव्याप्तिनिदर्शकं वचनं **साधर्म्यनिदर्शनम्,** तद्यथा—यो यो धूमवान् स स वह्निमान्, यथा महानसमित्यादि । व्यतिरेकव्याप्तिनिदर्शकं वचनं **वैधर्म्यनिदर्शनम्,** तद्यथा 'यो यो वह्निमान् न भवति, स स धूमवान् न भवति, यथा जलह्रद इत्यादिकम् । ३ । **इदमत्र बोध्यं**—यत्र हि साध्यसाधनयोर्व्याप्तिर्निश्चिता, तदेव व्याप्तिनिदर्शकस्थलत्वान्निदर्शनं भवति, न तत्र पक्षान्यत्वानन्यत्वनियमः कश्चित् । सति तन्निश्चये पक्षान्यस्येव पक्षैकदेशस्यापि निदर्शनत्वनिर्णयात्, यथा जगत्सकर्तृकत्वानुमाने, पृथिवीतरभेदानुमाने च, पक्षैकदेशस्यापि घटस्य निदर्शनत्वम् । न च पक्षैकदेशे साध्यनिश्चयो भवन् पक्षमात्रे साध्यानुमितिं प्रतिबध्नाति, पक्षतावच्छेदकावच्छेदेन साध्यानुमितिं प्रति पक्षतावच्छेदकसामानाधिकरण्येन साध्यनिश्चयस्य प्रतिबन्धकत्वानभ्युपगमात् । **किमुक्तम्?** यदवच्छेदेन साध्यमनुमीयते, तदवच्छेदेन तन्निश्चयः प्रतिबन्धको, न ततो न्यूनावच्छेदेन, अत एव पक्षतावच्छेदकसामानाधिकरण्येन साध्यानुमितिं प्रति पक्षतावच्छेदकावच्छेदेन साध्यनिश्चयः, पक्षतावच्छेदकसामानाधिकरण्येन साध्यनिश्चयश्च प्रतिबन्धक इति सार्वत्रिको राद्धान्त इति । **निदर्शने साध्याविनाभूतत्वेन दृष्टस्य लिङ्गस्यान्वयव्याप्तौ तथेति व्यतिरेकव्याप्तौ च न तथेति पक्षनिष्ठतयोपसंहरणमनुसन्धानम्,**

तद्यथा अन्वये 'तथा चायं'='धूमवाँश्चायम्' इत्यादि, व्यतिरेके च 'न च तथाऽयं'='न च धूमाभाववानयम्' इत्यादि । ४ । प्रतिज्ञावचनेन पक्षेऽनुमेयतयोद्दिष्टेऽनिश्चिते साध्यधर्मे हेत्वादिभिस्त्रिभिरवयवैः सञ्जातानुमेयप्रतिपत्तिसामर्थ्यानां परेषां परिपूर्णेन वाक्येन निश्चयापादनार्थं **तस्मात्तथेति हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं प्रत्याम्नायः** । तद्यथा 'तस्मात्तथा'='धूमाद् वह्निमान् पर्वतः' इत्यादि । ५ ।

तदेतत्स्वार्थपरार्थभेदभिन्नमनुमानं सामान्यविशेषभेदेन व्याप्तेर्द्वैविध्याद् द्विविधं–**दृष्टं, सामान्यतोदृष्टं च** । लिङ्गविशेषस्य लिङ्गिविशेषेण व्याप्तिग्रहाद् यदनुमानं, तद् **दृष्टम्** , **किमुक्तम्** ? यत्पूर्वं लिङ्गेन सह दृष्टं साध्यं, यच्च सम्प्रत्यनुमेयं, तयोरत्यन्तजात्यभेदे यदनुमानं तद् **दृष्टम्** , यथा धूमेन वह्न्यनुमानम् । १ । लिङ्गसामान्यस्य लिङ्गिसामान्येन व्याप्तिग्रहात् यदनुमानं, तत्सामान्यतोदृष्टव्याप्तिकत्वात्**सामान्यतो दृष्टम्** , **किमुक्तम्** ? यत्पूर्वं लिङ्गेन सह दृष्टं साध्यं, यच्च सम्प्रत्यनुमेयं, तयोरत्यन्तजातिभेदे यदनुमानं **तत्सामान्यतो दृष्टम्** , यथा–स्पर्शादिलिङ्गेन वाय्वनुमानम्, यथा वा ज्ञानादिना लिङ्गेनात्मानुमानम्, यथा वा क्रियात्वसामान्यस्य करणसाध्यत्वसामान्येनाविनाभावदर्शनाद् वास्यादिसाध्यच्छिदादिक्रियामुदाहृत्य गन्धादिज्ञानानां क्रियात्वेन तत्करणघ्राणादीन्द्रियानुमानम्, यथा वा–प्रवृत्तित्वसामान्यस्य फलवत्त्वसामान्येनाविनाभावदर्शनात्कर्षकवणिग्राजपुरुषाणां प्रवृत्तिमुदाहृत्य प्रवृत्तित्वेन हेतुना वर्णाश्रमिणां वैदिककर्मसु प्रवृत्तेः फलवत्त्वानुमानम् । २ । **गौतमीयास्तु** व्याप्तेस्त्रैविध्यादनुमानत्रैविध्यमाहुः तद्द्वयं गोतमसूत्रवैदिकवृत्तौ सविस्तरं समुपापीपदाम, तत एव तदवलोकनीयम् । **अत्र च** सर्वत्रानुमाने व्याप्तिर्व्याप्यैकनियतैवावगन्तव्या, न कदाचिद् व्यापकनियतापि, यतो न सा संयोगादिवदुभयत्र व्यासज्यते, व्यापकस्याधिकदेशवृत्तित्वेन व्याप्यव्यभिचारात् । **यत्रापि** समव्याप्तिके कृतकत्वानित्यत्वादौ व्याप्यस्यापि व्यापकत्वमस्ति, **तत्रापि** व्याप्यत्वरूपमाश्रित्यैव व्याप्तिर्वर्तते, न व्यापकत्वरूपम् , तस्य व्यभिचारिण्यपि संभवात् । अतस्तत्प्रदर्शनवेलायां व्याप्यगतत्वेनैव सा सर्वदा प्रदर्शनीया 'यो यो धूम-

वान् स स वह्निमान्' इति, न तु कदाचिद् व्यापकगतत्वेनापि 'यो यो वह्निमान् स स धूमवान्' इति । तत्रान्वये—साधनं तावद् व्याप्यं, साध्यं च व्यापकं, व्यतिरेके तु तद्विपरीतं=साध्याभावो व्याप्यः, साधनाभावश्च व्यापकः । तद् यथोक्तं मीमांसाभाष्यवार्तिके (अ १० पा १ अनु० परि० का. १२१)—

**"व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते ।**
**तयोरभावयोस्तस्माद् विपरीतः प्रतीयते ॥ १ ॥** इति
**अन्वये साधनं व्याप्यं साध्यं व्यापकमिष्यते ।**
**साध्याभावोऽन्यथा व्याप्यो व्यापकः साधनात्ययः ॥ २ ॥**

तस्माद् व्याप्तेर्व्याप्यगतत्वनियमात्सर्वत्र तद्ग्रहपूर्वक एव हेतुरवगन्तव्य इति दिक् ॥ १४ ॥

**ननु** यथाऽनुमानाङ्गत्वादपदेशो निरूपितः, तथा तत्प्रतियोगित्वादनपदेशोऽपि निरूपणीयः, तदवगमे तन्निरूपणस्योपयोगात्, अन्यथा विवेकग्रहाभावेन सुखतस्तदवगमानुपपत्तेः, तत्राह—

**"अप्रसिद्धोऽनपदेशः ॥ १५ ॥**

अप्रसिद्धः=यो हेतुः सपक्षे न प्रसिद्धः=न साध्येन गृहीतव्याप्तिकः=साध्याभावव्याप्त इति यावत्, सोऽनपदेशः=ईषदपदेशः=अपदेशाभासः=**विरुद्धाख्यो** हेत्वाभास इत्यर्थः ।

तत्रानपदेश इति लक्ष्यनिर्देशः, अप्रसिद्ध इति लक्षणमिति विवेकः ॥ १५ ॥

**ननु** किमेक एवानपदेशो वैशेषिकाणां ? तत्राह—

**"असन् सन्दिग्धश्चानपदेशः ॥ १६ ॥**

अनुवृत्त्या लाभसम्भवेऽपि कार्य्यभेदज्ञापनार्थमनपदेश इति पुनरुपात्तम् । असन्=यो हेतुः पक्षे न सन्=आश्रयस्वरूपादितो न भवति, यश्च सन्दिग्धः=सन्दिग्धव्याप्तिकः, सोऽनपदेशः=प्रथमोऽ**सिद्धाख्यो** द्वितीयो**ऽनैकान्तिकाख्यो** हेत्वाभास इत्यर्थः ।

तत्रानपदेश इति लक्ष्यनिर्देशः । असन् सन्दिग्धश्चेति लक्षणमिति विवेकः ।

**यत्तु** न्यायप्रक्रियासाम्यं कामयमानो वृत्तिकृत् सूत्रस्थचकारेण बाधसत्प्रतिपक्षावपि समुदचैषीत् । **तन्न युक्तम्** । वैदिकदर्शनानां मुख्यसिद्धान्तसाम्येऽपि प्रक्रियासाम्यानभ्युपगमात् । अन्यथा दर्शनभेदानुपपत्तेः । बाधस्यासिद्धौ सत्प्रतिपक्षस्यानैकान्तिके चान्तर्भावेण निर्वाहसम्भवात् । **"विरुद्धासिद्धसन्दिग्धमलिङ्गं काश्यपोऽब्रवीद्"** इति प्रशस्ताचार्य्यैर्हेत्वाभासत्रयस्यैव सङ्ग्रहे महर्षिसंमतत्वाभिधानाच्च ।

**इदमत्र बोध्यं**—यो हि वस्तुतो हेतुर्न भवति, केवलं पञ्चम्यादिनिर्देशसामान्याद् हेतुवदाभासते, **किंबहुना** ! यद्गोचरयज्ज्ञानं साक्षात्परम्परया वाऽनुमितिं प्रतिबध्नाति, स एव हेतुवदाभासनाद्धेत्वाभासः, अपदेशाभासत्वादनपदेशः, हेतुदोषैर्विरोधासिद्धिव्यभिचारैर्दुष्टत्वाच्चासद्धेतुरित्युच्यते । स च **विरुद्धासिद्धानैकान्तिकभेदात्त्रिविधः**—तत्र यस्तावत् सपक्षे न वर्तते, विपक्षे च वर्तते, व्याप्तिबलेन साध्यविपर्य्ययं च साध्नोति; स **विरुद्धः** । विपरीतसाधनात् । तच्चैतं नव्याः **"साध्याभावव्याप्तो वा साध्यव्यापकीभूताभावप्रतियोगी वा हेतुर्विरुद्धः"** इति निर्ब्रुवते। तस्योदाहरणं—शब्दो, नित्यः, कृतकत्वात्, घटादिवदित्यादिकम्। अयं च साध्याभावग्रहसामग्रीत्वेन साक्षादनुमितिप्रतिबन्धकः । साध्यवदवृत्तित्वलक्षणविरोधरूपदोषविशिष्टोऽयं हेतुरिति ज्ञाने सत्यनुमित्युदयासम्भवात् । १ । **असिद्धस्त्रिविधः**—आश्रयासिद्धः, स्वरूपासिद्धः, व्याप्यत्वासिद्धश्च । तत्त्वं चाश्रयासिद्धाद्यन्यतमत्वम्। **तत्र** यस्य हेतोराश्रयः=धर्मी=पक्ष इति यावन्न सिद्धः=न प्रमितः, स **आश्रयासिद्धः** । पक्षे पक्षतावच्छेदकविरहः, पक्षतावच्छेदकविरहवान् वा पक्षः आश्रयासिद्धिः, तया वर्तमानो हेतुराश्रयासिद्ध इति **नव्याः** । तस्योदाहरणं—गगनारविन्दं, सुरभि, अरविन्दत्वात् सरोजारविन्दवदित्यादिकम् । अस्य च करणप्रतिबन्धेनानुमितिप्रतिबन्धः कार्य्यम् । पक्षासिद्धौ लिङ्गदर्शनासिद्धेः । १ । यो हेतुः पक्षे स्वरूपतो न सिद्धः=न प्रमितः, **किमुक्तं** ? यो हेतुः पक्षे न वर्तते, स **स्वरूपा-**

**सिद्धः** । पक्षे हेत्वभावो, हेत्वभाववान् पक्षो वा स्वरूपासिद्धिः, तया वर्तमानो हेतुः स्वरूपासिद्ध इति **नवीनाः** । स चोभयासिद्धान्यतरासिद्धतद्भावासिद्धभागासिद्धभेदाच्चतुर्विधः—वादिप्रतिवादिनोरुभयोरसिद्धः **उभयासिद्धः** । यथा शब्दः, अनित्यः, सावयवत्वात्, घटवदिति । सावयवत्वं हि शब्दनित्यत्वानित्यत्ववादिनोरुभयोस्तत्रासिद्धम् । वादिप्रतिवादिनोरुभयोरेकस्य सिद्धोऽप्यन्यस्यासिद्धः **अन्तरासिद्धः** । यथा-शब्दः, अनित्यः, कार्य्यत्वादिति । शब्दानित्यत्ववादिनो वैशेषिकस्य शब्दे सिद्धमपि कार्य्यत्वं न तन्नित्यत्ववादिनो मीमांसकस्य तत्र तत्सिद्धम् । पक्षे हेतुभावेनासिद्धः **तद्भावासिद्धः** । यथा धूमभावेन वह्न्यधिगतौ कर्तव्यायामुपन्यस्तो बाष्प इति । विशेषणतो विशेषतोऽसिद्धः **भागासिद्धः** । यथा वायुः, प्रत्यक्षः, रूपवत्त्वे सति प्रत्यक्षस्पर्शाश्रयत्वात्, प्रत्यक्षस्पर्शाश्रयत्वे सति रूपवत्त्वादिति । कार्य्यं चास्य स्वरूपासिद्धस्य पूर्ववत् । २ । व्याप्यस्य भावो व्याप्यत्वं=व्याप्तिः, तस्याः असिद्धिः=व्याप्यत्वासिद्धिः, सा यत्र नियता, स **व्याप्यत्वासिद्धः** । स च साध्याप्रसिद्धसाधनाप्रसिद्धसोपाधिकभेदात् त्रिविधः—तत्र यस्य हेतोः पक्षादन्यत्र साध्यं न प्रसिध्यति, स **साध्याप्रसिद्धः** । यथा 'पर्वतः, काञ्चनमयवह्निमान्, धूमादिति । काञ्चनमयोवह्निर्न कुत्रापि प्रमीयते इति तत्साध्यको हेतुः साध्याप्रसिद्धः । साध्ये साध्यतावच्छेदकाभावः साध्याप्रसिद्धिः, तया वर्तमानः साध्याप्रसिद्ध इति **नव्याः** । यस्तु स्वयमेव न क्वचित्प्रसिध्यति, स **साधनाप्रसिद्धः** । यथा पर्वतो, वह्निमान्, काञ्चनमयधूमादिति । धूमो न कुत्रापि काञ्चनमयत्वेन प्रसिद्ध इति साधनाप्रसिद्धः । **नवीनास्तु** हेतौ हेतुतावच्छेदकाभावः साधनाप्रसिद्धिः, तया वर्तमानः साधनाप्रसिद्ध **इत्याहुः** । पूर्वस्य करणप्रतिबन्धः, चरमस्य च व्याप्तिज्ञानप्रतिबन्धः, कार्य्यम् । उपाधिना सह वर्तमानो हेतुः **सोपाधिकः** । **साध्यस्य व्यापकः साधनस्य चाव्यापको धर्मः=उपाधिः** । साध्यव्यापकत्वं च साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं, साधनाव्यापकत्वं च साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वमिति **नव्याः** । स च केवलसाध्यव्यापकः, पक्षध-

र्मावच्छिन्नसाध्यव्यापकः, साधनावच्छिन्नसाध्यव्यापक इति भेदात् त्रिविधः । तत्राद्यः पर्वतो, धूमवान्, वह्नेरित्यत्र "**आर्द्रेन्धनसंयोगः**", द्वितीयो वायुः, प्रत्यक्षः, प्रत्यक्षस्पर्शाश्रयत्वादित्यत्र "**उद्भूतरूपवत्त्वम्**", अयं चार्द्रेन्धनसंयोगवन्न केवलसाध्यस्य व्यापकः, गुणकर्मसु व्यभिचारात्, अपि च पक्षधर्मो द्रव्यत्वं, तद्विशिष्टस्य साध्यस्य । गुणकर्मसु च द्रव्यत्वाभाववान्न तस्य तत्र व्यभिचार इति । तृतीयः स श्यामः, मित्रातनयत्वादित्यत्र "**शाकपाकजन्यत्वम्**" । एका मित्रानाम्नी काचित्कल्याणी तनयद्वयमजीजनत्—एकदा शुभ्रभोजना शुभ्रम्, अन्यदा च शाकभोजना श्यामम् । तत्र शुभ्रस्तत्पदार्थः पक्षः, श्यामो निदर्शनम्, अत्र कोकिलादौ चोभयत्र श्यामत्वं साध्यमस्ति, शाकपाकजन्यत्वं नास्ति, तस्मान्नायं केवलसाध्यव्यापकः, किन्तु साधनं मित्रातनयत्वं, तदवच्छिन्नसाध्यव्यापकः । कोकिलादौ च मित्रातनयत्वविशेषणाभावेन विशिष्टाभावान्न तस्य तत्र व्यभिचार इति । सर्वश्चायमुपाधिः साध्यसमव्याप्तः, कदाचित्कुत्रचित्साध्यादधिकदेशवृत्तितया विषमव्याप्तोऽपि भवति । तस्य चैतस्य "अयं हेतुः, साध्यव्यभिचारी, साध्यव्यापकोपाधिव्यभिचारित्वाद्" इति हेतोः साध्यव्यभिचारानुमानेन व्याप्तिप्रतिबन्धः परमं प्रयोजनम् । **इदमत्र बोध्यं**—यत्रयत्रोपाधिरागच्छेत्, तत्र सर्वत्र तत्परिशुद्ध्यर्थमुपाधिव्यतिरेकेण साध्यव्यतिरेकोऽनुमातव्यः, तस्मिन्ननुमीयमाने चेत्पुनरपि कश्चिदुपाधिरापतेत्, **तदा** पूर्वोद्भावितः सोऽनुपाधिर्मन्तव्यः, हेतुश्च निरुपाधिकः स्वसाध्यसाधनक्षमः । तस्योदाहरणं "विमतं जगत्, कर्तृजन्यं, कार्य्यत्वात्, घटादिवदिति वैदिकानामीश्वरसाधकमनुमानम् । अत्र बाह्यैरुद्भावितः **शरीरजन्यत्व**मुपाधिः । स च सपक्षे साध्यव्यापकः, पक्षे च साधनाव्यापकः । तत्परीक्षार्थं "विमतं जगत्, कर्तृजन्यं न भवति, शरीरजन्यत्वाभावाद्, व्योमवद्" इति बाह्यमतेन तद्व्यतिरेकात्साध्यव्यतिरेकानुमाने **प्रागभावाप्रतियोगित्व**मुपाधिः । स च यत्र कर्तृजन्यत्वाभावस्तत्र शरीरजन्यत्वाभाव इति व्योम्नि सम्मतत्वात्साध्यस्य व्यापकः, पक्षे च जगति शरीरजन्यत्वाभावे सत्यपि कर्तृजन्यत्वाभावाभावात्साधनस्याव्यापक इति ।

तस्मादिह शरीरजन्यत्वमुपाधिरनुपाधिरिति। यस्य हेतोः प्रत्यक्षादिविरोधात्प्रतिज्ञैव न सिध्यति, स **प्रतिज्ञासिद्धः** चतुर्थोऽसिद्धः। यं गौतमीयाः **कालात्ययापदिष्ट**नाम्ना, **बाध**नाम्ना च व्यपदिशन्ति। स च पूर्वं प्रतिज्ञालक्षणेऽविरोधिपदनिवेशादेव सङ्गृहीतः, अतो नेह पृथगुपन्यस्त इति बोध्यम्। **अनैकान्तिकः** सव्यभिचारः। स च साधारणासाधारणानुपसंहारिभेदात् त्रिविधः। तत्त्वं च साधारणाद्यन्यतमत्वम्। यो हेतुः साध्यमतिक्रम्य वर्तते, **किमुक्तं**? यत्रयत्र साध्यं, तत्रतत्र वर्तमानोऽपि यत्र साध्यं नोपावर्तते, तत्रापि वर्तते—साध्यवदन्यवृत्तिरिति यावत्, स **साधारणोऽनैकान्तिकः**। यथा पर्वतो, वह्निमान्, प्रमेयत्वादित्यत्र प्रमेयत्वम्। विरुद्धस्तु केवलविपक्षवृत्तिः, अयं च पक्षसपक्षवृत्तिः सन् विपक्षवृत्तिरिति विशेषः। यो हेतुर्न सपक्षे वर्तते न विपक्षे, पक्षे केवलमुपावर्तते, स **सर्वसपक्षविपक्षव्यावृत्तः पक्षमात्रवृत्तिरसाधारणः**। यथा शब्दो नित्यः, शब्दत्वादित्यत्र शब्दत्वम्। यस्य हेतोः साध्यं सर्वत्रान्वीयते, स केवलान्वयिसाधकोऽ**नुपसंहारी**। यथा घटः, अभिधेयः, प्रमेयत्वादिति। केवलान्वयित्वं चात्यन्ताभावाप्रतियोगित्वमिति **नव्याः**। सर्वस्य चास्य व्याप्तिज्ञानप्रतिबन्धः कार्य्यम्। गौतमीयानां **सत्प्रतिपक्षो**ऽपि सन्दिग्धेऽनैकान्तिकेऽन्तर्भवति। **यथा** हि साधारणोऽनैकान्तिकः पक्षसपक्षविपक्षवृत्तिः, **तथैव** सत्प्रतिपक्षोऽपि, न तयोरस्ति किञ्चिदन्तरम्। **यस्य हि साध्याभावसाधकं हेत्वन्तरं विद्यते, स सत्प्रतिपक्षः**। यथा—शब्दः, नित्यः, श्रावणत्वात्, शब्दत्ववदित्यत्र श्रावणत्वम्। शब्दः, अनित्यः, कार्य्यत्वाद्, घटवदिति साध्याभावसाधकतया तत्प्रतिपक्षस्य कार्य्यत्वरूपहेत्वन्तरस्य विद्यमानत्वात्। तच्च प्रमेयत्ववत्पक्षसपक्षविपक्षेषु शब्दशब्दत्वध्वनिषु वर्तमानं न साधारणादतिरिच्यते। तस्माद् वैशेषिकाणां त्रय एव हेत्वाभासाः यथालक्षणमध्यवसातव्या इति।

**एतेन** निदर्शनाभासोऽपि व्याख्यातो **वेदितव्यः**। स हि साध्यविकलसाधनविकलसाध्यसाधनोभयविकलभेदात्त्रिविधः। तत्र **साध्येन**

**हीनः साध्यविकलः** । यथा—शब्दो, नित्यः, श्रावणत्वात्, ध्वनिवदिति । ध्वनौ नित्यत्वं नास्ति । जन्यत्वात् । **साधनेन हीनः साधनविकलः** । यथा शब्दो, नित्यः, श्रावणत्वाद्, आत्मवदिति । श्रावणत्वमात्मनि नास्ति । **साध्यसाधनोभाभ्यां हीनः उभयविकलः** । यथा—शब्दो, नित्यः, श्रावणत्वात्, घटवदिति । घटे नित्यत्वं नास्ति । जन्यत्वात् । श्रावणत्वं नास्ति । द्रव्यत्वात् ।

आत्माश्रयान्योऽन्याश्रयचक्रकानवस्थादयो दोषाः निग्रहस्थानान्तर्भूताः ते च न्यायसूत्रवैदिकवृत्तौ व्याख्याताः, तस्मात्तत एव दर्शनीया इत्यलमिह बहुना ॥ १६ ॥

विरुद्धासिद्धयोरुदाहरणमाह—

**"यस्माद्विषाणी तस्मादश्वः ॥ १७ ॥**

यस्मादस्य विषाणमस्ति, तस्मादयमश्व इत्यर्थः ।

रासभपिण्डं दूरतः पश्यतोऽयं प्रयोगः । पिण्डोऽयम्, अश्वः, विषाणित्वात्, यन्नैवं, तन्नैवं, यथा शशशृगालनरवानरादिकम् । अत्र विषाणित्वं हेतुः साध्याभावेन व्याप्तत्वाद् विरुद्धः, पक्षेऽसत्त्वाच्चासिद्धः इति भावः ।

इदं च विरुद्धैकदेशस्योदाहरणं न विरुद्धस्य । विषाणित्वस्य हेतोः सर्वत्रानश्वे स्तम्भादावभावात् । तदुदाहरणं तु पुरस्तादुक्तमिति ध्येयम् ॥१७॥

सन्दिग्धमुदाहरति—

**"यस्माद्विषाणी तस्माद्गौरिति चानैकान्तिकस्योदाहरणम् ॥ १८ ॥**

विरुद्धासिद्धयोरुदाहरणमुक्तमिति सूचनाय चकारः । गोपिण्डोऽत्र पक्षः । यस्मादयं पुरोवर्त्ती पिण्डो विषाणी=विषाणवान्, तस्माद् गौः=गोत्वजातिमानिति=अस्मिन् प्रयोगे यदिदं विषाणित्वं हेतुः तदनैकान्तिकस्य=सन्दिग्धस्योदाहरणं=साध्यवदन्यस्मिन् वर्तमानत्वाद् निदर्शनमित्यर्थः ।

तत्रायं, गौः विषाणित्वात्, संमतवदिति प्रयोगाकारः ॥ १८ ॥

**लक्ष्मोदाहरणैः सम्यग्हेत्वाभासा निरूपिताः ।**
**घोषितव्या यथासत्त्वमर्थे शुद्धिमभीप्सता ॥ १ ॥**

**ननु** वैदिकानां सच्चित्स्वरूपो जीवात्मा, कथम् **"इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्योऽर्थान्तरस्य हेतुः"** इति तज्जन्यज्ञानगुणलिङ्गेन तस्य सिद्धिरुच्यते ? तत्राह—

**"आत्मेन्द्रियार्थसन्निकर्षाद् यन्निष्पद्यते, तदन्यत्॥१९॥**

आत्मेन्द्रियार्थसन्निकर्षाद्=आत्माधिष्ठितानां घ्राणादीनामिन्द्रियाणां गन्धादिभिः प्रातिस्विकार्थैः संयुक्तसमवायादिलक्षणात्सम्बन्धविशेषात्सन्निकर्षात् यत्=तत्तदर्थानुभवात्मकं यज्ज्ञानं निष्पद्यते=प्रत्यगात्मनि समवायसम्वन्धेनोत्पद्यते, तत्=तज्ज्ञानमन्यत्=स्वरूपभूताज्ज्ञानाद् भिन्नमित्यर्थः ।

सत्यं वैदिकानामस्माकं परमार्थतो ज्ञानस्वरूप एव जीवात्मा, न ज्ञानगुणकः । तथापि तत्रासंसारं मनःसंयोगात्तत्तदर्थानुभवात्मकं "गन्धोऽयं, रसोऽयं, गन्धमनुभवामि, रसमनुभवामीत्यादिव्यवहारप्रयोजकमिच्छादिवत्तत्समकक्षमुत्पादविनाशशीलं ज्ञानं गुणोऽप्यभ्युपगम्यते । ज्ञानस्वरूपस्य च तस्य ज्ञानगुणाश्रयत्वं प्रकाशात्मनः सवितुः प्रभाश्रयत्ववन्नानुपपन्नमिति न ज्ञानगुणलिङ्गेन तत्सिद्धौ कश्चिद्दोष इति भावः ।

**इदमत्र बोध्यं—यथा** हि साङ्ख्ययोगवेदान्तिनो वैदिकान्तराः प्रकाशात्मकत्वेऽपि प्रत्यगात्मनस्तत्रोक्तव्यवहारोपपत्त्यर्थं वृत्तिज्ञानमभ्युपगच्छन्ति **तथैव** वैशेषिकाः गौतमाः मीमांसकाश्चात्मनि ज्ञानं गुणमभ्युपयन्ति । **विशेषस्त्वियानेव** यत्ते प्रत्यगात्मसन्निधानाच्चेतनायमाने मनसि ज्ञानोत्पत्तिमभ्युपगम्यात्मनि तदुपचारमाहुः, वैशेषिकादयश्चात्मसन्निधाने सत्यपि मनसस्तथात्वमनभ्युपेत्य तत्र तदुत्पत्तेरशक्यत्वेन तद्योगविशिष्टे प्रत्यगात्मन्येव तदुत्पादमाहुरिति, मुक्त्यवस्थायां च सर्वेषां मनःसंयोगाभावाविशेषेण तत्संयोगजज्ञानादिसमस्तगुणानुत्पत्तौ दुःखात्यन्तनिवृत्त्या शुद्धः केवलः पुमान् स्वेनात्मना चिता ब्रह्मानन्दमुपभुञ्जानो विष्णुपदं सुखमध्यास्त इति सर्वमनवद्यमिति ।

इदानीं हेत्वाभासविवेचनस्य फलमाह—आत्मेन्द्रियार्थसन्निकर्षाद् यत्ताव-ज्ज्ञानमुत्पद्यते, तच्चात्मनि लिङ्गमसिद्धविरुद्धानैकान्तिकेभ्योऽन्यत्=अना-भासमित्यर्थ इति शङ्करमिश्रः ॥ १९ ॥

**ननु** ज्ञानगुणलिङ्गेन स्वात्मसिद्धावपि परात्मसिद्धिः कथं स्यात्? न-हि परकीयं ज्ञानं कस्याप्यध्यक्ष, येन तत् तत्र लिङ्गं भवेत्, तत्राह—

**"प्रवृत्तिनिवृत्ती च प्रत्यगात्मनि दृष्टे परत्र लिङ्गम् ॥२०॥**

प्रवृत्तिनिवृत्ती च=रागजन्यः प्रयत्नविशेषः प्रवृत्तिः, द्वेषजन्यः प्रयत्नवि-शेषो निवृत्तिः, ते च प्रत्यगात्मनि=स्वात्मनि दृष्टे=हिताहितप्राप्तिपरिहारा-नुकूलक्रियात्मकचेष्टाजनकतया साक्षात्कृते परत्र=परस्मिन्नात्मनि लिङ्ग=लिङ्गसम्पादकत्वाल्लिङ्गमित्यर्थः ।

**यथा** हि स्वकीया चेष्टा **तथैव** परकीया । चेष्टात्वसामान्यात् । तां पश्यतो भवत्यनुमानम् "अस्येयं चेष्टा, प्रयत्नविशेषजन्या, चेष्टात्वात्, मदीयचेष्टावत् । स च प्रयत्नः आत्मसमवेतः, प्रयत्नत्वात्, मदीयप्रयत्नवद्" इति । तेन च परात्मसिद्धिरिति भावः ॥ २० ॥

**आत्मसिद्धिप्रसङ्गेन लिङ्गालिङ्गविनिर्णयः ।**
**तथा परात्मनो भावः आह्निकेऽस्मिन् प्रदर्शितः ॥ १ ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगव-त्पादशिष्यहरिप्रसादकृतायां वैशेषिकसूत्रवैदिकवृत्तौ तृतीयाध्यायस्याद्यमाह्निकम् ।



# अथ तृतीयोऽध्यायः।

## द्वितीयमाह्निकम्।

अथेन्द्रियार्थप्रसिद्धिमिव मनसो गतिमात्मनो लिङ्गं वक्ष्यति, तच्चान्तरेण मनःपरीक्षां नोपपद्यते, तस्मादुद्देशक्रममुल्लङ्घ्य तत्परीक्षामध्ये मनःपरीक्षामारभमाणः आह—

**"आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावोऽभावश्च मनसो लिङ्गम् ॥ १ ॥**

स्मृतिरनुमानमागमः संशयः सुखदुःखोपलब्धिरिति चकारेण समुच्चिनोति। आत्मेन्द्रियार्थसन्निकर्षे=आत्माधिष्ठितानामिन्द्रियाणां स्वस्वार्थैर्युगपत्सन्निकर्षे सत्यपि योऽयमेकस्मिन्नर्थे ज्ञानस्य=तद्गोचरसाक्षात्कारात्मकस्यानुभवस्य भावः=उत्पादः, अन्यस्मिँश्च तस्मिन्नभावः=अनुत्पादः, स मनसः=मनइन्द्रियस्य लिङ्गं=सिद्धौ प्रमाणमित्यर्थः।

आत्माधिष्ठितानि घ्राणादीनीन्द्रियाणि गन्धादिभिः स्वस्वविषयैः सम्प्रयुक्तानि सन्त्यपि न सर्वाणि तानि सर्वार्थविषयमेकदा ज्ञानं जनयन्ति, किन्त्वेकमेव किञ्चिदेकार्थविषयम्, तेन भवत्यनुमानम् 'अस्ति किञ्चिन्निमित्तान्तरं, यस्य सन्निधानवशादेकत्र ज्ञानमुत्पद्यते, तदभावाच्चान्यत्र नोत्पद्यते', इति। यत्तन्निमित्त तदेव मन इति भावः।

तत्रात्मेन्द्रियार्थसन्निकर्षः, कार्य्योत्पत्तौ करणान्तरसापेक्षः, सत्यपि कार्य्यानुत्पादकत्वात्, तन्त्वादिवत्, अत्र यदपेक्षणीयं करणान्तरं तन्मनः। सुखादिज्ञानं, करणजन्यं, ज्ञानत्वात्, गन्धादिज्ञानवत्, अत्र घ्राणादीनामकरणत्वाद् यत्तावत्करणं तदिन्द्रियं मनः। स्मृत्यादयो, न घ्राणादिनिमित्ताः, घ्राणाद्युपरमेऽपि गन्धादिस्मृत्याद्युपलब्धेः, न चानिमित्तास्ते सम्भवन्ति, तस्माद्यदेषां निमित्तं तन्मन इति विवेकः।

**इदमत्र बोध्यं**—यद्यपि वैशेषिकैर्वैदिकत्वान्मध्यमपरिमाणं मनोऽभ्युपगम्यते, नाणुपरिमाणम्। अवैदिकत्वात्। तस्य च सर्वदा घ्राणादिभि-

रिन्द्रियैः सन्निधानमेव विद्यते, नासन्निधानम् । तथापि न तत्सन्निधानमत्र विवक्षितम् । समानस्य तस्य ज्ञानप्रयोजकत्वानभ्युपगमात् । अपि चात्मकृत्या तत्तदिन्द्रियप्रदेशे लब्धवृत्तिकस्य मनसः सन्निधानम् । तच्चासमानमेव, न समानम्, अतो न तत्र काचिदनुपपत्तिरिति ॥ १ ॥

**नन्वेवं** सिध्यतु मनः, तस्य द्रव्यत्वनित्यत्वे केन सेत्स्यतः ? तत्राह—

**"तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ २ ॥**

तस्य=मनसो द्रव्यत्वनित्यत्वे=द्रव्यत्वं नित्यत्वं च वायुना=वायुद्रव्यत्वनित्यत्वसाधकहेतुना व्याख्याते=साधिते वेदितव्ये इत्यर्थः ।

यद्धि शरीराश्रयं सत्स्वसंयुक्तेऽर्थे ज्ञातुरपरोक्षप्रतीतिसाधनं द्रव्यं, तदिन्द्रियमित्युच्यते । मनसि घ्राणादौ चैतल्लक्षणं समानम् । तत्र संयोगो गुणः, तद्वत्त्वात् क्रियावत्त्वाच्च द्रव्यम्, आमोक्षं स्थायित्वादद्रव्यत्वेन नित्यं च, मनो वायुवदिति भावः ।

**नव्यास्तु** "आत्मभिन्नत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वमिन्द्रियत्वं, शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वं वा तत्त्वमिति सर्वेन्द्रियसाधारणं लक्षणं वर्णयन्ति ॥ २ ॥

**ननु** किमिदं प्रतिशरीरमेकमुतानेकं मनः ? तत्राह—

**"प्रयत्नायौगपद्याज्ज्ञानायौगपद्याच्चैकम् ॥ ३ ॥**

मन इति विपरिणम्यानुवर्तते । प्रयत्नायौगपद्यात्=प्रत्यवयवं क्रियाहेतुप्रयत्नस्य यौगपद्याभावात्=एकदाऽनुत्पादात्, ज्ञानायौगपद्याच्च=प्रतिविषयं ज्ञानस्य यौगपद्येनोत्पादाभावाच्चैकं=प्रतिशरीरमेकं मन इत्यर्थः ।

येनाङ्गेन येनेन्द्रियेण च मनः संयुज्यते, तदङ्गक्रियाहेतुः प्रयत्नः, तेनेन्द्रियेण च तद्विषयविषयं ज्ञानमात्मनि समुत्पद्यते इति हि वैशेषिकी सरणिः । तत्र प्रतिशरीरं मनसोऽनेकत्वे प्रत्यवयवं प्रतीन्द्रियं च मनःसंयोगसद्भावादनेके प्रयत्नाः ज्ञानानि चानेकानि युगपदात्मनि समुत्पद्येरन्, न क्रमेण । दृश्यते तु प्रयत्नानां ज्ञानानां च क्रमेणोत्पादः । तद्यथा—एकत्र प्रयतमानस्यान्यत्र व्यापाराभावः, तत्र समाप्तव्यापारस्य चान्यस्मिन् व्यापारसद्भावः, एवमेकविषयज्ञानस्य विषयान्तरे ज्ञानाभावः, तत्रोपर-

तस्य च तस्मिन् ज्ञानसद्भाव इति । न चायमन्तरेणैकं मनः संभवति, तस्मादनुमीयते—प्रतिशरीरमेकं मनो नानेकमिति भावः ॥ ३ ॥

**मनः** परीक्ष्य पुनरात्मानं परीक्षमाणस्तत्साधकानि लिङ्गानि दर्शयति—

**"प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराः सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानि ॥ ४ ॥**

ज्ञानमात्मनो लिङ्गं पुरस्तादुक्तमिति सूचनाय चकारः । मुखनासिकाभ्यां बहिर्निष्क्रमणशीलः ऊर्ध्वगतिकः शरीरान्तःसञ्चारी वायुः **प्राणः**, मूत्रपुरीषयोरधोनयनहेतुरवाग्गतिकः शरीरान्तःसञ्चारी वायुर**पानः**, अक्षिपक्ष्मणोः संयोगनिमित्तं कर्म **निमेषः**, तयोश्च विभागनिमित्तं कर्मो**न्मेषः**, शरीरस्य वृद्धिक्षतसंरोहणादिकं जीवनकार्य्यत्वा**ज्जीवनम्**, तच्च प्राणधारणम्, अभिमतविषयग्राहकैरिन्द्रियैः सम्बन्धार्थं तत्रतत्र मनसो वृत्ति**र्मनोगतिः**, चक्षुरिन्द्रियेण नागरङ्गचिरबिल्वादिरूपालोचनानन्तरं रसानुस्मृतिक्रमेण दन्तोदकसम्प्लवलक्षणा रसनेन्द्रियविक्रिया **इन्द्रियान्तरविकारः**, धर्मजन्यमनुकूलवेदनीयं गुणः **सुखम्**, अधर्मजन्यं प्रतिकूलवेदनीयं गुणो **दुःखम्**, स्वार्थं वा परार्थं वाऽप्राप्तार्थप्रार्थनमि**च्छा**, यस्मिन् सति प्रज्वलितमिवात्मानं मन्यते, स द्विष्टसाधनताज्ञानजन्यो गुणो **द्वेषः**, कृतिपर्य्यायश्चेष्टाजनको गुणः **प्रयत्नः**, प्राणापानौ, निमेषोन्मेषौ, जीवनं, मनोगतिः, इन्द्रियान्तरविकारः, सुखं, दुःखम्, इच्छा, द्वेषः, प्रयत्नश्चेति दशात्मनः=जीवात्मनो लिङ्गानि=ज्ञानवत् साधकप्रमाणानीत्यर्थः ।

**शरीर**परिगृहीते प्राणापानलक्षणे वायौ यदिदमूर्ध्वाधोगमनलक्षणं स्वभावविपरीतं कर्म, तदन्तरेण प्रयत्नवन्तं शरीराधिष्ठातारमनुपपन्नम् । अतो यस्तं तिर्य्यग्गमनस्वभावं वायुमिच्छापूर्वकं भस्त्राध्मापयतेव भस्त्रकामूर्ध्वमधश्चानयति, स आत्मा । १ । निमेषोन्मेषाख्ये कर्मणी नोदनाभिघातादिदृष्टकारणमन्तरेणोत्पद्यमाने दारुयन्त्रनिमेषोन्मेषवत्कस्यचित्प्रयत्नं विना न संभवतः, तत्र यस्तावद्दारुयन्त्रप्रयोक्तेव यत्नवान् तस्य प्रयोक्ता, स आत्मा । २ । जीवनपदवाच्यं शरीरस्य प्रतिक्षणं वर्द्धनं, क्षतस्य भग्नस्य च संरोहणं, नान्तरेणाधिष्ठातारमुपपद्यते, यथा लघीयसः सदनस्य वर्द्धनं

क्षतस्य भग्नस्य च निर्माणम्, अतो यस्तत्र सदनाधिपतिरिव सदनं शरीरमिदं यथोचिताहारादिना प्रतिक्षणं वर्द्धयति, क्षतं चौषधादिना प्ररोहयति, भग्नं च तेन संरोहयति, स आत्मा । ३ । स्वाभिमतविषयग्राहकैर्घ्राणादिभिरिन्द्रियैः सम्बन्धविशेषाय शरीराभ्यन्तरप्रदेशेषु मनसोगतिर्नान्तरेण प्रेरयितारमुपपद्यते, तस्मात्सदनस्थदारक इव हृदयस्थो यः कन्दुकं मनस्तत्र तत्र सम्बन्धार्थं प्रेरयति, स आत्मा । ४ । चक्षुषा नागरङ्गादिरूपालोचनानन्तरं तत्सहचारिरसानुस्मृतिक्रमेण रसनेन्द्रियविकारो दृश्यते, न च सोऽन्तरेण प्रयत्नं संभवति, न वा प्रयत्नोऽयमन्तरेणेच्छां, न वा गर्द्धेयमन्तरेण रसानुस्मृति, न वा स्मृतिरियमन्तरेण पूर्वानुभवम्, अतो यस्तावत्सदनस्य गवाक्षयोरुभयोरन्तःप्रेक्षक इव द्वाभ्यामिन्द्रियाभ्यां रूपरसयोर्दर्शी चेतनः कश्चित्, स आत्मा । ५ । यस्तावद्गुणः, स द्रव्याश्रितो दृष्टः, यथा रूपम्, सुखदुःखादयोऽपि, गुणाः, न च तेऽयावद्द्रव्यभाविनोऽहम्प्रत्ययसमानाधिकरणा बाह्येन्द्रियाप्रत्यक्षाः सन्तः पृथिव्यादीनि द्रव्याणि कथञ्चिदाश्रयितुमर्हन्ति, द्रव्येण च तदाश्रयेण भवितव्यम्, अतो यद् द्रव्यं तेषामाश्रयः स आत्मेति भावः ।

**इदमत्र बोध्यं**—यद्यप्यत्र ज्ञानादयोऽनित्याः गुणाः नित्यस्यात्मनः सूत्रिता, तथापि ते मनोयोगविशिष्टस्यैव विज्ञातव्या, न केवलस्य, तस्य कूटस्थनित्यत्वाभ्युपगमात् । धर्मोपचयापचयाभ्यां च धर्मिविकारस्य सर्वतन्त्रासिद्धत्वात् । मुक्त्यवस्थायां च मनोयोगनिवृत्त्या तन्निवृत्तेरभिधास्यमानत्वादिति ॥ ४ ॥

**ननु** ज्ञानादिभिर्लिङ्गैः सिद्धेऽपि प्रत्यगात्मनि तस्य द्रव्यत्वनित्यत्वे केन सिध्येताम्? तत्राह—

**"तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ ५ ॥**

तस्य=आत्मनो द्रव्यत्वनित्यत्वे=द्रव्यत्वं नित्यत्वं च, वायुना=वायुद्रव्यत्वनित्यत्वसाधकहेतुना व्याख्याते=साधिते वेदितव्ये इत्यर्थः ।

**इदमत्र बोध्यं**—यादृशो वायुर्नित्यो द्रव्यं च, तादृगेवात्मा नित्यो द्रव्यं चेति नायमतिदेशार्थः । तस्य परमार्थतो नित्यत्वात् । विशिष्टस्य

ज्ञानादिगुणाश्रयत्वेऽपि केवलस्य तदभावात्। अपि च नित्यत्वसामान्यं द्रव्यत्वसामान्यं चातिदेशार्थं इति ॥ ५ ॥

**ननु** केनचिद् दृष्टेन लिङ्गेनात्मा साधयितव्यः?, किं ज्ञानादिनोपन्यस्तेन लिङ्गेन? तत्राह—

**"यज्ञदत्त इति सन्निकर्षे प्रत्यक्षाभावाद् दृष्टं लिङ्गं न विद्यते ॥ ६ ॥**

सन्निकर्षे=यज्ञदत्तेन त्वक्चक्षुषोः संयोगलक्षणे सन्निकर्षे सति यज्ञदत्त इति प्रत्यक्षाभावात्=इतिना प्रत्यक्षाकारमाह, शरीरप्रत्यक्षेऽपि **यज्ञदत्तोऽयमिति** तदधिष्ठातुरात्मनः प्रत्यक्षाभावाद् दृष्टं लिङ्गं=विशेषतो दृष्टव्याप्तिकं लिङ्गं न विद्यते=न वर्तते इत्यर्थः ॥ ६ ॥

**ननु** कीदृशस्तर्हि ज्ञानादितो लिङ्गादात्मा सिध्यति? तत्राह—

**"सामान्यतोदृष्टाच्चाविशेषः ॥ ७ ॥**

चकारेण ज्ञानादिकं समुच्चिनोति। सामान्यतोदृष्टाच्च=सामान्यतोदृष्टसंज्ञकाच्च ज्ञानादितोलिङ्गादविशेषः=आत्मत्वसामान्यविशेषरहितः कश्चित्तदाश्रयः सामान्यतो द्रव्यभेदः सिध्यतीत्यर्थः ॥ ७ ॥

**नन्वात्माऽयमिति** विशेषस्य कुतो लाभः? तत्राह—

**"तस्मादागमिकः ॥ ८ ॥**

तस्मात्=यस्मात्सामान्यतोदृष्टादनुमानादविशेषः सिध्यति, तस्मात्तस्यात्मेति विशेषोऽयमागमिकः=आगमाः" **"यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः"** (यजुः ४०।७) **"आत्मानं चेद्विजानीयाद्"** (बृह. ४।४।१२) इत्यादयो वेदाः, तत्सिद्ध इत्यर्थः ॥ ८ ॥

**ननु** पृथिव्यादीनामष्टानामन्यतमः कश्चिदात्मा सेत्स्यति, कृतं तद्व्यतिरिक्तेनागमिकेन, तत्राह—

**अहमितिशब्दस्य व्यतिरेकान्नागमिकम् ॥ ९ ॥**

अहमितिशब्दस्य=आत्मनि निरूढस्याहमितिपदस्य व्यतिरेकात्=पृथिव्यादिवाचकैः शब्दैर्व्यतिरेकदर्शनात् तदन्यतमत्वासिद्धेर्नागमिकं=नागमसिद्धमात्मानं तं कश्चिदपह्नोतुं पर्य्याप्त इत्यर्थः।

**यो** हि यस्यार्थस्य वाचकः शब्दः, तस्य तेनान्वयो दृष्टः, न व्यतिरेकः, सामानाधिकरण्यमन्वयः, तदभावो व्यतिरेकः । चेत्पृथिव्यादीनामष्टानामन्यतमः कश्चिदात्मा भवेत्, तदा तस्मिन् निरूढस्याहमितिशब्दस्य पृथिव्यादिभिरष्टाभिर्व्यतिरेको न दृश्येत, किन्तु "द्रव्यं भूः द्रव्यमापो द्रव्यं तेजः" इत्यादिवद् "अहं भूरहमुदकमहं तेजोऽहं वायुः" इत्याद्यन्वयो दृश्येत, न च दृश्यते, ततो भवत्यनुमानं—'नायमात्मा पृथिव्यादीनामन्यतमः कश्चित्' अपि च ? ततो व्यतिरिक्तः सामान्यतोदृष्टलिङ्गाधिगम्यः, यस्यागमतो विशेषप्रतिपत्तिरिति भावः ॥ ९ ॥

अत्र प्रत्यक्षात्मवादी प्रत्यवतिष्ठते—

**"यदि दृष्टमन्वक्षमहं देवदत्तोऽहं यज्ञदत्त इति ॥ १० ॥**

इतिशब्दो ज्ञानाकारमाह । यदि=चेदहं देवदत्तोऽहं यज्ञदत्त इति=देवदत्तोऽहं यज्ञदत्तोऽहमित्याकारकमन्वक्षम्=आत्मविषयं प्रत्यक्षं दृष्टं=भानेक्तः, दर्शनं=मानसं ज्ञानमितियावदस्ति, तदा किं तत्साधकानुमानोपन्यासेनेत्यर्थः ।

**यद्धि** प्रत्यक्षं वस्तु, न तस्यानुमानेन साधनं युज्यते, यथाहुः श्रीवाचस्पतिमिश्राः न्यायवार्तिकतात्पर्य्यटीकायां—**"न हि करिणि दृष्टे चीत्कारेण तमनुमिमतेऽनुमातारः"** इति। देवदत्तोऽहं यज्ञदत्तोऽहमिति प्रत्यक्षश्च प्रत्यगात्मा । तस्मात्तस्यानुमानेन साधनमयुक्तमिति भावः ॥ १० ॥

समाधत्ते—

**"दृष्ट आत्मनि लिङ्गे एक एव दृढत्वात् प्रत्यक्षवत्प्रत्ययः ॥ ११ ॥**

आत्मनि=षष्ठ्यर्थेयं सप्तमी । ज्ञानादिलिङ्गाश्रयत्वसूचनार्थमात्मन सप्तम्या निर्देशः । आत्मसम्बन्धिनि लिङ्गे=ज्ञानप्रयत्नादिके लिङ्गे दृष्टे=अहं जानामि, पठितुमिच्छामि, गन्तुं करोमि [illegible] प्राप्ते [illegible] प्रत्यगात्म[illegible]ऽवभासनार्थः, न [illegible] [illegible]सिद्धिर्[illegible] प्रत्य[illegible] इति [illegible]

वधारणम्, एकः अनुमानात्मक एव प्रत्ययः=अस्ति पृथिव्यादिव्यतिरिक्तः कश्चिदात्मा यदाश्रयं ज्ञानप्रभृतिकं लिङ्गमिति तद्गोचरो योऽध्यवसायो जायते, स च दृढत्वात्=अन्यथाभावशङ्कया चालयितुमशक्यत्वात्प्रत्यक्षवत्=प्रत्यक्ष इवावभासते, न तु प्रत्यक्ष इत्यर्थः ।

**यदिदं** ज्ञानप्रभृतिकं लिङ्गमात्मनि दृश्यते, ततस्तद्गोचरोऽनुमानात्मक एक एव प्रत्ययो जायते "अस्ति कश्चिदष्टद्रव्यातिरिक्तः प्रत्यगात्मा, यं ज्ञानेच्छाकृतिप्रभृतयो गुणाः आश्रयन्ति" इति, न तदपरः प्रत्यक्षात्मकोऽपि तद्विषयः प्रत्ययः । अन्यथा प्रावादुकानां दृष्टिभेदानुपपत्तेः । स च दृढत्वात्प्रत्यक्षवदवभासमानोऽपि न प्रत्यक्षः सम्पद्यते । लैङ्गिकत्वात् । अत एव च तद्विषयः प्रत्यगात्मापि न जातु प्रत्यक्षः । तथा च वक्ष्यति— "**तत्रात्मा मनश्चाप्रत्यक्षे**" वै०—अ० ८—आ० १—सू० २ इति । प्रत्यक्षं चेह लौकिकमिन्द्रियार्थसन्निकर्षोत्पन्नमव्यपदेश्यमव्यभिचारि ज्ञानम् । अनुमानं च लैङ्गिकं ज्ञानमिति भावः ॥ ११ ॥

**ननु** न वयमात्मानं लैङ्गिकप्रत्ययगोचरतया प्रत्यक्षं ब्रूमहे, अपि च देवदत्तोऽहं यज्ञदत्तोऽहमिति मानसप्रत्ययगोचरतया, तत्राह—

**"देवदत्तो गच्छति यज्ञदत्तो गच्छतीत्युपचाराच्छरीरे प्रत्ययः ॥ १२ ॥**

देवदत्तो गच्छति यज्ञदत्तो गच्छतीति=देवदत्तो गच्छति यज्ञदत्तो गच्छतीति प्रत्ययवदुपचारात्=लक्षणातः शरीरे=विषयत्वं सप्तम्यर्थः, शरीरगोचरः प्रत्ययः=देवदत्तोऽहं यज्ञदत्तोऽहमिति प्रत्यय इत्यर्थः ।

**अन्वयानुपपत्तिर्वा**, तात्पर्य्यानुपपत्तिर्वा लक्षणाबीजमाख्यायते । तत्र **यथान्वयानुपपत्त्या** शरीरविशिष्टे प्रत्यगात्मनि शक्तानां देवदत्तादिपदानामुपचाराद् देवदत्तो गच्छति यज्ञदत्तो गच्छतीति शरीरगोचरः प्रत्ययः **तथा** देवदत्तोऽहं, यज्ञदत्तोऽहमिति प्रत्ययोऽपि शरीरगोचरो मन्तव्यो नात्मगोचर इति भावः ॥ १२ ॥

**आशङ्कते**—

**"सन्दिग्धस्तूपचारः ॥ १३ ॥**

तुशब्दः पूर्वपक्षमभिव्यनक्ति । **ननु** देवदत्तोऽहं यज्ञदत्तोऽहमित्यादौ निरूपितो भवद्भिरुपचारः सन्दिग्धः=किमयं शरीरे वा स्यादात्मनि वा स्यादुभयत्र वा स्यादिति संशयितो विद्यते, नाध्यवसित इत्यर्थः ।

**वि**निगमकाभावादुपचारे सन्देहः, सति च तस्मिन्ननिर्णयस्तत्त्वस्येति भावः ॥ १३ ॥

**ननु** मदुक्तोपचारे सन्दिग्धे देवदत्तोऽहं यज्ञदत्तोऽहमिति शरीरप्रत्यक्षो नो चेत्प्रत्ययः, तर्हि क्वायं प्रत्यक्षः स्यात्? तत्राह—

**"अहमिति प्रत्यगात्मनि भावात्परत्राभावादर्थान्तरप्रत्यक्षः ॥ १४ ॥**

अहमिति=देवदत्तोऽहं यज्ञदत्तोऽहमितिप्रत्ययः प्रत्यगात्मनि=स्वस्मिन् भावात्=सत्त्वात् परत्र=परस्मिँश्चाभावात्=असत्त्वादर्थान्तरप्रत्यक्षः=शरीरादन्योऽर्थोऽर्थान्तरमात्मा, तत्र प्रत्यक्षः इत्यर्थः ।

अहमिति प्रत्ययः प्रत्यगात्मनि भवति, परत्र च न भवति, चेच्छरीरप्रत्यक्षः स्यात्, **तदा** योग्यत्वाविशेषात्परत्रापि स्यात्, नासौ भवति, तस्मान्नायं शरीरप्रत्यक्षः, अपि चात्मप्रत्यक्ष इति भावः ॥ १४ ॥

**स**माधत्ते—

**"देवदत्तो गच्छतीत्युपचारादभिमानात्तावच्छरीरप्रत्यक्षोऽहङ्कारः ॥ १५ ॥**

देवदत्तो गच्छतीति=देवदत्तो गच्छति यज्ञदत्तो गच्छतीति प्रत्ययवदुपचारात्=लक्षणातोऽभिमानाच्छरीरप्रत्यक्षः=आत्मत्वाभिमानादात्मभूते शरीरे प्रत्यक्षस्तावदहङ्कारः=देवदत्तोऽहं यज्ञदत्तोऽहमिति प्रत्यय इत्यर्थः ।

**यथा** हि "गौरोऽहं कृशोऽहम्" इत्यभिमानाद्, "देवदत्तो गच्छति यज्ञदत्तो गच्छति" इति चोपचाराच्छरीरविषयस्तावत्प्रत्ययः, **तथा** देवदत्तोऽहं यज्ञदत्तोऽहमिति प्रत्ययोऽपि शरीरविषय एव प्रत्येतव्यो, नात्मविषयः, समानयोगक्षेमत्वादिति भावः ॥ १५ ॥

**पुनः** शङ्कते—

**"सन्दिग्धस्तूपचारः ॥ १६ ॥**

तुशब्दः पूर्वपक्षमभिव्यनक्ति। **ननु** देवदत्तो गच्छति यज्ञदत्तो गच्छतीत्यत्राभिहितो भवद्भिरुपचारः सन्दिग्धः=किमिहात्मनि गतेरुपचारः, किं वा शरीरे देवदत्तत्वादेरुपचारः—इति संशयितो विद्यते, नाध्यवसित इत्यर्थः।

**विनिगमकाभावात्सन्देहः**, सति च तस्मिँस्तत्त्वस्य निर्णयो न भवति। ततोऽर्थान्तरप्रत्यक्षोऽहङ्कारो न शरीरप्रत्यक्ष इति भावः॥ १६॥

परिहरति—

**"न तु शरीरविशेषाद् यज्ञदत्तविष्णुमित्रयोर्ज्ञानं विषयः॥ १७॥**

यज्ञदत्तविष्णुमित्रयोर्ज्ञानं=यज्ञदत्तोऽहं, विष्णुमित्रोऽहमिति प्रत्ययः शरीरविशेषात्=प्रकारो विशेषः, शरीरं विशेषो यस्मिन् स तथा, तस्मात्=शरीरप्रकारकत्वात्=शरीरविषयत्वादिति यावद् विषयः=उपचारसन्देहेनात्मविषयो न तु=नैव कल्पयितव्य इत्यर्थः।

कूटस्थनित्यस्तावदात्मा, न केवले तस्मिन्नौपचारिकी वा, स्वाभाविकी वा गतिः संभवति। शरीरे च सा प्रत्यक्षा। तेन तत्र तत्सामानाधिकरण्याय देवदत्तत्वादेरुपचारो न विरुध्यते। कुतस्तत्सन्देहः स्यात्। तदसन्देहे च देवदत्तोऽहं यज्ञदत्तोऽहं विष्णुमित्रोऽहमिति शरीरप्रत्यक्षोऽहङ्कारो नात्मप्रत्यक्ष इति भावः॥ १७॥

**ननु** देवदत्तोऽहं यज्ञदत्तोऽहं विष्णुमित्रोऽहमित्यभिमानाच्चेच्छरीरप्रत्यक्षोऽहङ्कारो नात्मप्रत्यक्षः, **तदा** सामान्यतोदृष्टाद् विशेषासिद्धेरागमिक एव परं भवतु प्रत्यगात्मा, कृतं तत्रानुमानप्रयासेन बहुना, तत्राह—

**"अहमितिमुख्ययोग्याभ्यां शब्दवद्व्यतिरेकाव्यभिचाराद्विशेषसिद्धेर्नागमिकः॥ १८॥**

मुख्ययोग्याभ्याम्=अनौपचारिकत्वं मुख्यत्वं, प्रत्यक्षयोग्यत्वं योग्यत्वं, मुख्येन योग्येन चाहमिति=देवदत्तोऽहं यज्ञदत्तोऽहं विष्णुमित्रोऽहमिति प्रत्ययेन शब्दवद्व्यतिरेकाव्यभिचाराद्विशेषसिद्धेः=शब्देन लिङ्गेन पृथिव्यादिष्वष्टसु द्रव्येषु स्वव्यतिरेकस्यैकान्तिकत्वात्पृथिव्यादिव्यतिरिक्तस्य स्वा-

श्रयभूतस्याकाशस्येवात्मनोविशेषस्यसिद्धेर्नागमिकः=नायमागममात्रसिद्ध इत्यर्थः ।

**यथा** हि पृथिव्यादिष्वष्टसु द्रव्येष्वनुपलम्भात्पृथिव्यादिव्यतिरेकं न जातु शब्दो व्यभिचरति, तद्व्यतिरेकाव्यभिचारिणा मुख्येन योग्येन च तेन स्वाश्रयभूतस्य पृथिव्याद्यष्टद्रव्यातिरिक्तस्याकाशविशेषस्य सिद्धिर्भवति, **तथा** पृथिव्यादिष्वष्टसु द्रव्येष्वनुपलम्भात्तद्व्यतिरेकाव्यभिचारिणा मुख्येन योग्येन चाहमिति प्रत्ययलिङ्गेन स्वाश्रयभूतस्य पृथिव्याद्यष्टद्रव्यातिरिक्तस्यात्मनो विशेषस्य सिद्धिर्जायते । तस्मादनुमानतोऽपि विशेषसिद्धेर्नागममात्रसिद्धोऽयं प्रत्यगात्मा, अपि चानुमानागमोभयसिद्ध इति भावः ॥ १८ ॥

**परीक्षितं** तावदात्मद्रव्यम्, इदानीं तन्नानात्वं परीक्षयिष्यन् पूर्वपक्षयति—

**"सुखदुःखज्ञाननिष्पत्त्यविशेषादैकात्म्यम् ॥ १९ ॥**

ऐकात्म्यं=चैत्रमैत्रादिशरीरभेदेऽपि नात्मभेदः, किन्त्वैकात्म्यम्=आत्मैकत्वं=सर्वेषु चैत्रमैत्रादिशरीरेष्वेक एवात्मेति यावत् । कुतः ? सुखदुःखज्ञाननिष्पत्त्यविशेषात्=सुखं च दुःखं च ज्ञानं च, तानि सुखदुःखज्ञानानि, कामादीनामुपलक्षणमेतत्, तेषां सुखदुःखज्ञानादीनां निष्पत्तेः=उत्पत्तेरविशेषात्=प्रतिशरीरं समानत्वादित्यर्थः ।

**यथा** हि शब्दलिङ्गाविशेषादेकमेवाकाशं, यौगपद्यादिप्रत्ययलिङ्गाविशेषादेक एव कालः, पूर्वापरादिप्रत्ययलिङ्गाविशेषाच्चैकैव दिक्, **तथा** सुखदुःखज्ञानादिलिङ्गाविशेषात्सर्वेषु शरीरेष्वेक एवात्मेति भावः ॥ १९ ॥

**सिद्धान्तयति—**

**"व्यवस्थातो नाना ॥ २० ॥**

नाना=नैक एवात्मा, किन्तु प्रतिशरीरं भिन्नत्वान्नानात्मानः । कुत ? व्यवस्थातः=नानाभेदभिन्नानां सुखदुःखादीनां प्रत्यात्ममप्रतिसन्धानं व्यवस्था, प्रत्यात्मं तन्नियम इति यावत्, तत इत्यर्थः ।

**यथा** हि बाल्यावस्थायामनुभूतं वृद्धावस्थायामनुसन्धीयते—'मम सुखमासीद्' 'मम दुःखमासीदिति, **तथै**कात्म्येऽपि देहान्तरानुभूतमनुसन्धीयेत । तत्रैव च सर्वत्रानुभवितुरेकत्वात् । तथा चैकस्मिन् सुखिनि सर्वे सुखिनो, दुःखिनि च सर्वे दुःखिनो भवेयुः । न चैवमुपलभ्यते । तस्मान्नैकात्म्यम् । अपि च प्रतिशरीरमात्मभेदान्नानात्मान इति भावः ॥ २० ॥

**ननु** युक्तिरुच्यते, न शास्त्रं, तत्राह—

**"शास्त्रसामर्थ्याच्च ॥ २१ ॥**

'नाना' इत्यनुवर्तते । **"ये समानाः समनसो जीवा जीवेषु मामकाः"** (यजुः १९–४६) **"चेतनश्चेतनानाम्"** (कठो०५।१३ इत्यादिवेदः शास्त्रं, तत्सामर्थ्यादपि नानात्मान इत्यर्थः ॥ २१ ॥

**मनः परीक्षणं कृत्वा कृतमात्मपरीक्षणम् ।**
**अवशिष्टं, तृतीयस्य द्वितीयेऽस्मिन्, सविस्तरम् ॥ १ ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृतायां वैशेषिकसूत्रवैदिकवृत्तौ
तृतीयाध्यायस्य द्वितीयमाह्निकम् ।

समाप्तश्चायमात्ममनोऽध्यायस्तृतीयः ।



# अथ चतुर्थोऽध्यायः ।

## आद्यमाह्निकम् ।

**अथोद्दिष्टानि** पृथिव्यादीनि द्रव्याणि नव यथासम्भवं परीक्षितानि, सम्प्रति जीवात्मपरमात्मभेदभिन्नमात्मद्रव्यं वर्जयित्वा शिष्टानां तेषां मूलकारणं प्रकृतिं परीचिक्षिषुराचार्य्यश्चतुर्थाध्यायमारभमाणः पूर्वं तस्य स्वरूपं दर्शयति—

**"सदकारणवन्नित्यम् ॥ १ ॥**

सत्=सत्तायोगिभवदकारणवत्=कारणवन्न भवति नित्यं=परिणामिनित्यं च यत्, तदेव पृथिव्यादीनां मूलकारणं प्रकृतिरित्यर्थः ।

**तत्र** सदित्यनेनासतोऽभावस्य, अकारणवदित्यनेनेच्छाया गुणस्य, नित्यमित्यनेन क्षणिकात्मनो विज्ञानस्य, कूटस्थनित्यस्य च ब्रह्मणो, व्यवच्छेद इति विवेकः ॥ १ ॥

**नन्वस्य** सद्भावे किं प्रमाणं? तत्राह—

**"तस्य कार्य्यं लिङ्गम् ॥ २ ॥**

तस्य=नित्यस्य मूलकारणस्य सद्भावे कार्य्यं=दृश्यमानमेतज्जगल्लक्षणकार्य्यं लिङ्गं=प्रमाणमित्यर्थः ।

**यत्कार्य्यं** तत्सर्वं सोपादानकं यथा घटादि, कार्य्यं चेदं, जगत् सावयवत्वात्, तस्मादनेनापि सोपादानकेन भवितव्यं, यदस्योपादानकारणं=समवायिकारणमिति यावत्, तदेव नित्यं मूलकारणं प्रकृतिरिति भावः ॥ २ ॥

**ननु** कस्मात्कार्य्यं कारणस्य लिङ्गं भवति? तत्राह—

**"कारणभावात्कार्य्यभावः ॥ ३ ॥**

यत इति शेषः । यतः कारणभावात्=कारणस्य सत्त्वात् कार्य्यभावः=कार्य्यस्य सत्त्वं भवतीत्यर्थः ।

**यस्य** भावो हि यस्य भावादभावश्चाभावात्, तत्तस्य लिङ्गमिति ध्रुवो नियमः । कार्य्यस्य भावोऽपि कारणस्य भावादभावश्चाभावान्नियमेन जायते,

न जातु क्वचिद् व्यभिचरति, तस्मात् तत्तस्य लिङ्गं भवतीति भावः।

तत्रावयवक्रियाविभागादिन्यायेन विभज्यमानस्य स्थूलकार्य्यस्य लोष्ठादेरुत्तरमुत्तरमल्पतरतमादिभावो यत्र निवर्तते—**किमुक्तं**? यत्रोत्तरोत्तरं गच्छन्नवयवावयविप्रवाहस्तावदुपरमते, यतश्च नापरं किञ्चिदल्पतमं विद्यते, यः खलु परमोऽल्पीयान्, स परमाणुरिति परिभाष्यते, ते चानन्ताः पृथिव्यादीनां परमाणवो न सहस्रेणापि पुरुषायुषैः परिगणयितुं शक्यन्ते। न च तेषां सङ्ख्यावच्छक्तितोऽप्यन्तो विद्यते। ते चावान्तरभेदाद् बहुधा सन्तोऽपि सत्त्वादिभेदात् त्रिधैव विभज्यन्ते। ताँश्चैतान् साङ्ख्ययोगवैदान्तिकाः गुणनाम्ना, वैशेषिका इव गौतमाः मीमांसकाश्च परमाणुनाम्ना, श्वेताश्वतरशाखिनश्च लोहितशुक्लकृष्णनाम्ना, प्रकाशक्रियाऽऽवरणशक्तिनाम्ना च व्यपदिशन्ति। सर्वेषां चामीषां या काचिद्दिव्यशक्तिलक्षणा प्रमाणकुशलैरप्यधिगन्तुमशक्या योगिभिश्चदुर्लक्ष्या मुमुक्षुभिश्चदुरतिक्रमा कार्य्यासंहितावस्था, यां सांङ्ख्ययोगवैदान्तिकाः वैदिकान्तराः साम्यावस्थां तावदाचक्षते, तदेवेह मूलकारणं प्रकृतिरित्यभिधीयते। दैवी शक्तिः परा शक्तिर्माया महामाया प्रकृतिरव्यक्तमव्याकृतमित्यादिकं चास्यैव महतो मूलकारणस्य प्रकृतेर्नामान्तरम्। अस्यामेव च मूलप्रकृतौ ब्राह्मेण मानेन वर्षशतस्यान्ते प्रलयवेलायामखिलं जगन्निशि सुषुप्तमिव तमसा गूढं तत्पिण्डीभूतमवतिष्ठते। प्रकृतिश्च तदा स्वधानामभाग् भवति। तद्यथाऽऽम्नातं भगवति वेदे

**"न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः।**
**आनीदवातं स्वधया तदेकं तस्माद्धान्यद् न परः किञ्चनास॥**

ऋ० म० १० सू० १२९ इति।

तत्र च प्राणिनां भोगभूतये भगवत्सिसृक्षानन्तरं यदा क्षोभः उपजायते, तदा क्षुब्धायास्तस्याः रजस्तमोन्यग्भूतः सत्त्वगुणबहुलो यो भागविशेषो जातः, स महदित्याख्यायते। महतश्चावस्थाविशेषः कश्चिदहङ्कार इति। तौ चेमौ द्वौ साङ्ख्ययोगाभ्यां प्रकृतिपरिणामविशेषौ स्वीक्रियेते, वैशेषिकैरिव गौतमैर्मीमांसकैर्वैदान्तिकैश्च क्षु-

ऽधायाः प्रकृतेर्भोगविशेषौ । ततस्तौ साङ्ख्यानां योगानां चातिरिक्तावपि न वैशेषिकादीनां ततोऽतिरिच्येते । प्रक्रियाभेदस्य चाभ्युपगमान्नायं कश्चिद्दोष इति । तस्याहङ्कारस्य च सत्त्वगुणबहुलाद् भागविशेषादीश्वरनियत्या मध्यमपरिमाणं प्रतिजीवमेकमाभ्यन्तरेन्द्रियं मनः समुत्पद्यते । तमोगुणबहुलाच्च तस्माद् व्यापकौ दिक्कालौ, व्यापकं च शब्दतन्मात्रम्, अणुपरिमाणं च स्पर्शतन्मात्रं, रूपतन्मात्रं रसतन्मात्रं, गन्धतन्मात्रमिति चतुष्टयमुपजायते । तानि चैतानि चत्वारि वैशेषिकैर्गौतमैर्मीमांसकैश्च द्व्यणुकपरिभाषया परिभाष्यन्ते । शब्दतन्मात्रादाकाशमुत्पद्यते, स्पर्शतन्मात्रात् त्र्यणुकादिप्रक्रमेण महान् वायुः, रूपतन्मात्रात् तेनैव क्रमेण महाँस्तेजोराशिः, रसतन्मात्रात् तेनैव क्रमेण महान् सलिलनिधिः, गन्धतन्मात्राच्च तेनैव क्रमेण महती भूरिति विवेकः ॥ ३ ॥

**ननु** कार्य्यलिङ्गात् किञ्चिन्मूलकारणमात्रं सिध्यति, न नित्यं, नित्ये तस्मिन् किं लिङ्गं? तत्राह—

**"अनित्य इति विशेषतः प्रतिषेधभावः ॥ ४ ॥**

लिङ्गमिति मण्डूकप्लुतिन्यायेनानुवर्तते । अनित्य इति=नास्ति नित्यः कश्चिद्भावपदार्थ इति भवतां यो विशेषतः=सार्वविभक्तिकस्तसिः, विशेषस्य नित्यस्य प्रतिषेधभावः=प्रतिषेधसद्भावः स एव लिङ्गं=नित्ये तस्मिन् लिङ्गमित्यर्थः ।

**यदि** नित्यः कश्चित्पदार्थो न स्यात्, **तदा** कस्यायम् 'अनित्य' इति प्रतिषेधो भवेत् । न हि निष्प्रतियोगिकः कश्चन प्रतिषेधो भवति । तस्मादस्ति कश्चिन्नित्यः पदार्थो, यस्यायं प्रतिषेध इति भावः ॥ ४ ॥

**ननु** भावमात्रस्योत्पत्तिविनाशधर्मकत्वादनित्य इति विशेषतः प्रतिषेधभावोऽस्माकं न कस्यचिन्नित्यभावस्यापेक्षया, तत्राह—

**"अविद्या ॥ ५ ॥**

यो यो भावः स सर्वो जन्यते ध्वस्यते चेति सर्वथा भावत्की भ्रान्तिरित्यर्थः । निरवयवभावानामुत्पत्तिविनाशासम्भवादिति भावः ।

**तत्र** वैदिकानामीश्वरो, जीवः, प्रकृतिश्चेति भावत्रयं निरवयवम्;

अन्यत् सावयवम् । ईश्वरो जीवश्चेति द्वौ कूटस्थनित्यौ, प्रकृतिश्च परिणामिनित्येति विवेकः ॥ ५ ॥

**प्रकृतिर्जीव ईशश्च त्रयमेतत्सनातनम् ।**
**अभिधेयं विनिश्चेयं दर्शनानां तु वैदिकम् ॥ १ ॥**

**ननु** चेत्पृथिव्यादीनां मूलकारणं प्रकृतिर्विद्यते, **तदा** कुतो न तस्य चक्षुषोपलब्धिः? तत्राह—

**"महत्यनेकद्रव्यवत्वाद् रूपाच्चोपलब्धिः ॥ ६ ॥**

महति=महत्त्वं परिमाणं, तद्वति द्रव्ये वर्तमानादनेकद्रव्यवत्त्वात्=अनेकद्रव्यसमवेतत्वाद् रूपाच्च=रूपसमवायाच्चोपलब्धिः=चक्षुषोपलब्धिर्भवतीत्यर्थः ।

**यस्मिन्** महत्यनेकद्रव्यवत्त्वं रूपं च विद्यते, तस्यैव चक्षुषोपलब्धिर्भवति, नान्यस्य । मूलकारणे च तस्मिन्ननेकद्रव्यवत्त्वाभावान्न तस्य चक्षुषोपलब्धिरिति भावः ।

**तत्रा**नेकद्रव्यवत्त्वाद् रूपाच्चोपलब्धिरित्युक्ते द्व्यणुकेऽतिव्याप्तिः स्यात्, अतो महतीत्युक्तम् । द्व्यणुके महत्त्वं नास्ति । तस्य त्रसरेण्वादावेवाभ्युपगमात् । महत्यनेकद्रव्यवत्त्वादित्युक्ते वायावतिव्याप्तिः स्यात्, तद्वारणाय रूपाच्चेत्युक्तम् । महति रूपाच्चेत्युक्ते स्फुटत्वास्फुटत्वातिशयानतिशयदर्शनलक्षणेऽवयविप्रत्यक्षेऽव्याप्तिः, तस्यावयवभूयस्त्वप्रकर्षाप्रकर्षाभ्यां जायमानत्वात्, अतोऽनेकद्रव्यवत्त्वादित्युक्तम् । अनेकद्रव्यवत्त्वं चानेकद्रव्यसमवेतत्वं=भूयोऽवयवाश्रितत्वमिति विवेकः ॥ ६ ॥

**ननु** वायौ महत्यनेकद्रव्यवत्त्वं विद्यते, तस्य कुतो न चक्षुषोपलब्धिः? तत्राह—

**"सत्यपि द्रव्यत्वे महत्त्वे रूपसंस्काराभावाद् वायोरनुपलब्धिः ॥ ७ ॥**

द्रव्यत्वे=अनेकद्रव्यवत्त्वे महत्त्वे=महत्त्वपरिमाणवत्त्वे सत्यपि=विद्यमानेऽपि रूपसंस्काराभावात्=सम्बन्धप्रयोजकत्वात्संस्कारः सम्बन्धः, रूपस्य

सम्बन्धः=समवायः, तस्याभावाद् वायोः=मरुतोऽनुपलब्धिः=चक्षुषोपलब्धिर्न भवतीत्यर्थः ।

अत्र चाक्षुषरश्मेरुद्भूतरूपाभावात् मध्यन्दिनोल्काप्रकाशस्य च रूपाभिभवादनुपलब्धिरित्यादिस्वयमूह्यम् **नव्यास्तु** बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे न रूपं कारणं, किन्तु चाक्षुषप्रत्यक्षे रूपं, स्पार्शनप्रत्यक्षे स्पर्शः कारणमित्याहुः । तदेतद् वायुप्रत्यक्षत्वप्रसक्तेरयुक्तमिति वैदिकाः ॥ ७ ॥

**ननु** यस्य रूपस्य सम्बन्धाद् द्रव्यस्य चाक्षुषोपलब्धिरुच्यते, तदुपलब्धिः कुतो भवति? तत्राह—

**"अनेकद्रव्यसमवायाद् रूपविशेषाच्च रूपोपलब्धिः॥८॥**

अनेकद्रव्यसमवायात्=अनेकानि द्रव्याणि समवायिकारणतया विद्यन्ते यस्य, तस्मिन्ननेकद्रव्यारब्धे महत्परिमाणवति द्रव्ये समवायात्=समवेतत्वाद् रूपविशेषाच्च=रूपगतो विशेषो रूपविशेषः=रूपत्वव्याप्यमुद्भूतत्वमनभिभूतत्वं च, तदाश्रयत्वाच्च रूपोपलब्धिः=रूपस्य चक्षुषोपलब्धिर्भवतीत्यर्थः ।

**यद्**नेकद्रव्यारब्धं महत्परिमाणवद् द्रव्यं समवैति, विशेषं च भजते, **तदेव** रूपं चक्षुषोपलभ्यते, नान्यत् । अतो विशेषाश्रयत्वे सत्यनेकद्रव्यारब्धमहत्परिमाणवद्द्रव्यसमवायाद् रूपोपलब्धिश्चक्षुषा भवतीति भावः ।

**तत्र** प्रत्यक्षग्रहणयोग्यत्वमुद्भवः, बलवत्सजातीयग्रहणकृतमग्रहणमभिभव इति विवेकः ॥ ८ ॥

अतिदिशति—

**"तेन रसगन्धस्पर्शेषु ज्ञानं व्याख्यातम् ॥ ९ ॥**

तेन=रूपे प्रत्यक्षज्ञानं प्रति यत् प्रयोजकमुक्तं, तेन रसगन्धस्पर्शेषु=रसे, गन्धे, स्पर्शे च विशेषगुणे ज्ञानं=रासनं, नासिकं, स्पार्शनं ज्ञान व्याख्यातं=निरूपितं वेदितव्यमित्यर्थः ।

**यथा**ऽनेकद्रव्यसमवायाद् रूपविशेषाच्च रूपोपलब्धिश्चक्षुषा भवति, **तथा**ऽनेकद्रव्यसमवायाद् रसविशेषाद् गन्धविशेषात्स्पर्शविशेषाच्च रसगन्धस्पर्शोपलब्धी रसनया घ्रोणया त्वचा च भवतीति वेदितव्यमिति भावः॥ ९॥

**ननु** पाषाणादिगन्धस्य घोणयाऽनुपलब्धेर्व्यभिचारस्तत्राह—

**"तस्याभावादव्यभिचारः ॥ १० ॥**

तस्य=गन्धविशेषस्याभावात्=तत्रोद्भवाभावादव्यभिचारः=उक्तनियम-व्यभिचारो नेत्यर्थः।

**पाषाणादिगन्धस्यानुद्भूतत्वाद् घोणयाऽनुपलब्धिरिति भावः।**

**तत्र** पाषाणादिध्वंसजन्यं तद् भस्म गन्धवदुपलभ्यते, तच्च तदुपादानोपादेयमिति सुध्रुवं, लोके यद् द्रव्यं यद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयं, यथामहावस्त्रध्वंसजन्यं खण्डवस्त्रम्। द्वयोश्च समानोपादानोपादेयत्वे भस्मवत्पाषाणादिनापि गन्धसमवायिना भवितव्यम्। तस्य तत्समवायित्वे घोणया तदनुपलब्धिरनुद्भूतत्वादिति विवेकः ॥ १० ॥

**ननु** यथा रूपरसगन्धस्पर्शानां गुणानां बाह्यैकैकेन्द्रियेणोपलब्धौ प्रयोजकं कथितं **तथा** संख्यादिगुणान्तरोपलब्धावपि किञ्चित्प्रयोजकं कथितव्यं? तत्राह—

**"संङ्ख्याः, परिमाणानि, पृथक्त्वं, संयोगविभागौ, परत्वापरत्वे, कर्म च रूपिद्रव्यसमवायाच्चाक्षुषाणि ॥११॥**

चकारेण स्नेहद्रवत्ववेगानामुपसङ्ग्रहः। कर्मेति प्रसङ्गादुक्तम्। स्नेहद्रवत्ववेगसहितानि सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वकर्माणि रूपिद्रव्यसमवायात्=रूपवद्द्रव्येषु समवायेन वर्तनाच्चाक्षुषाणि=चाक्षुषाणि स्पार्शनानि च भवन्तीत्यर्थः।

**तत्र** संङ्ख्याः इति बहुवचनमेकत्वादिसर्वसङ्ख्योपसङ्ग्रहार्थम्। एकत्वं च नित्यगतं नित्यमनित्यगतमनित्यं, द्वित्वादिकं परार्द्धपर्य्यन्तमपेक्षाबुद्धिजन्यत्वात्सर्वत्रानित्यम्। गुणकर्मादौ संङ्ख्याप्रतीतिस्त्वेकार्थसमवायान्न तु समवायादिति विवेकः ॥ ११ ॥

**"अरूपिष्वचाक्षुषाणि ॥ १२ ॥**

पूर्वसूत्रं समग्रमनुवर्तते। अरूपिषु=रूपरहितेषु च द्रव्येषु समवायेन वर्तमानानि तानि सङ्ख्यादीनि कर्मान्तान्यचाक्षुषाणि=न चाक्षुषाणि भवन्ति न स्पार्शनानि चेत्यर्थः ॥ १२ ॥

अतिदिशति—

**"एतेन गुणत्वे, भावे च सर्वैन्द्रियं ज्ञानं व्याख्यातम् ॥ १३ ॥**

एतेन=रूपादिषु गुणेषु तत्तत्प्रयोजकात् तत्तदिन्द्रियजन्यप्रत्यक्षज्ञानव्याख्यानेन गुणत्वे=तद्गतायां गुणत्वजातौ भावे च=सत्तायां च परजातौ सर्वैन्द्रियं ज्ञानं=चक्षुरादिसर्वेन्द्रियजन्यं ज्ञानं व्याख्यातं=**"येनेन्द्रियेण या व्यक्तिर्गृह्यते, तेनैव तद्गता जातिः"** इति न्यायेन व्याख्यातं वेदितव्यमित्यर्थः ॥ १३ ॥

**भूरादिसर्वभावानां प्रकृतिर्मूलकारणम् ।**
**पारोक्ष्यं चापरोक्ष्यं च तेषामस्मिन् परीक्षितम् ॥ १ ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृतायां वैशेषिकसूत्रवैदिकवृत्तौ चतुर्थाध्यायस्याद्यमाह्निकम् ।



# अथ चतुर्थोऽध्यायः।

## द्वितीयमाह्निकम्।

**ननु** मूलकारणसद्भावे यत्पृथिव्यादिकार्य्यद्रव्यं लिङ्गमुदाहृतं, तत्कतिविधं भवति? तत्राह—

**"तत्पुनः पृथिव्यादिकार्य्यद्रव्यं त्रिविधं शरीरेन्द्रियविषयसंज्ञकम्॥ १॥**

तत्पुनः=मूलकारणप्रकृतिसद्भावे यल्लिङ्गत्वेनोदाहृतं, तच्च पृथिव्यादिकार्य्यद्रव्यं=भूप्रभृतिकं जन्यद्रव्यं शरीरेन्द्रियविषयसंज्ञकं=शरीरसंज्ञकमिन्द्रियसंज्ञकं विषयसंज्ञकं भवन्त्रिविधं=त्रिप्रकारं भवतीत्यर्थः।

**भोक्तु**र्भोगायतनं, चेष्टेन्द्रियार्थाश्रयो वा, शरीरम्। शरीराश्रयं सत्त्वसंयुक्तेऽर्थे ज्ञातुरपरोक्षप्रतीतिसाधनं द्रव्यमिन्द्रियमित्युक्तम्। शरीरेन्द्रियव्यतिरिक्तत्वे सत्यात्मोपभोगसाधनं द्रव्यं विषयः। तद्भेदात् त्रिधा पृथिवी, त्रिधा जलं, त्रिधा तेजस्त्रिधा वायुः, चतुर्धेति प्रशस्तदेवः, द्विधाऽऽकाशं, शरीराभावात्, एकधा कालः, शरीरेन्द्रियोरुभयोरभावात्, एकधा दिक्, तथात्वादिति भावः।

**तत्रा**स्मदादीनां शरीरं, नासाग्रवर्ति घ्राणमिन्द्रियं, मृत्पाषाणादिर्विषय इति त्रिधा पृथिवी १; पानीयमण्डलस्थसत्त्वानां शरीरं; जिह्वाग्रवर्ति रसनमिन्द्रियं, सरित्समुद्रहिमकरकादिर्विषय इति त्रिधा जलम् २; तेजोमण्डलस्थसत्त्वानां शरीरं, कृष्णताराग्रवर्ति चक्षुरिन्द्रियं, भौमं, दिव्यम् उदर्य्यम्, आकरजं, विषय इति त्रिधा ज्वलनम् ३; वायुमण्डलस्थसत्त्वानां शरीरं, सर्वशरीरव्यापि त्वगिन्द्रियं, वृक्षादिकम्पनहेतुः शरीरान्तस्सञ्चारी वायुः प्राणश्च विषय इति त्रिधा वायुः ४, प्राणस्त्वेकोऽपि हृदादिनानास्थानवशात्, मुखनासिकानिर्गमादिनानाक्रियावशाच्च प्राणापानसमानोदानव्यानभेदात्पञ्चधा व्यपदिश्यते, नागकूर्मकृकलदेवदत्तधनञ्जयानां प्राणेऽन्तर्भावाभ्युपगमात्, तथा च तत्सङ्ग्रहश्लोक[1]—

---

१ उद्गीर्णस्य हेतुर्नागः, उन्मीलनस्य कूर्मः, क्षुतः कृकलः, विजृम्भणस्य देवदत्तः, पोषणस्य धनञ्जयः।

**"हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः।**
**उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः॥ १ ॥** इति।

कर्णशष्कुल्यवच्छिन्नमाकाशं श्रोत्रं, शिष्टं विषय इति द्विधाकाशम् ५; क्षणादिकालो विषयः ६; पूर्वादिदिग् विषयः ७; मनस्त्विन्द्रियमुक्तमिति विवेकः।

**अत्र** घ्राणं पार्थिवं, रूपादिषु गन्धस्यैवाभिव्यञ्जकत्वात्, कुङ्कुमगन्धाभिव्यञ्जकगोघृतवत्। **न चोदा**हरणे हेत्वसिद्धिः, तस्य स्वीयरूपादिव्यञ्जकत्वेन गन्धमात्राभिव्यञ्जकत्वाभावादिति **वाच्यम्।** तत्रैवकारेण परकीयरूपाद्यव्यञ्जकत्वस्यापिविवक्षितत्वात्। नवशरावगन्धाभिव्यञ्जकोदके तु न व्यभिचारः संभवति। तस्य सक्तुरसस्यापि व्यञ्जकत्वात्। वायूपनीतसुरभिभागाः वाऽत्रोदाहार्य्याः, तेन न कुत्रापि कश्चिद्दोषः। गन्धमात्राभिव्यञ्जके घ्राणेन्द्रियसन्निकर्षे व्यभिचारवारणार्थं तु द्रव्यत्वे सतीति विशेषणं नियमेन दातव्यम्। **रसनं** जलीयं, गन्धाद्यव्यञ्जकत्वे सति रसाभिव्यञ्जकत्वात्, सक्तुरसाभिव्यञ्जकोदकवत्। अत्रापि सन्निकर्षे व्यभिचारवारणाय द्रव्यत्वं देयम्। **चक्षुः** तैजस, परकीयस्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात्, प्रदीपवत्। प्रदीपस्य स्वीयस्पर्शव्यञ्जकत्वादत्र दृष्टान्तेऽसिद्धिवारणाय प्रथमं परकीयेति, घटादेः स्वीयरूपव्यञ्जकत्वाद् व्यभिचारवारणाय द्वितीयं परकीयेति। **यद्वा** प्रभाया दृष्टान्तत्त्वसभवादाद्यं परकीयेति न देयम्। द्रव्यत्वं तु पूर्ववद्दोषवारणाय देयम्। **त्वगिन्द्रियं** वायवीयं, रूपादिषु स्पर्शस्यैवाभिव्यञ्जकत्वात्, अङ्गसङ्गिसलिलशैत्याभिव्यञ्जकव्यजनपवनवत्। द्रव्यत्वनिवेशः पूर्ववत्। **श्रोत्रं** तु शब्दग्राहकत्वादाकाशमेव, न ततोऽतिरिक्तमिति द्रष्टव्यम्। १।

**ननु** यदेतात्रिविध पृथिव्यादि कार्य्यद्रव्य निरूपितं, तत् किं पञ्चभिर्भूतैरेकैकमारभ्यते, आहोस्विदेकैकमेकैकेन? तत्राह—

**"प्रत्यक्षाप्रत्यक्षाणां संयोगस्याप्रत्यक्षत्वात् पञ्चात्मकं विद्यते॥ २॥**

शरीरेन्द्रियविषयसञ्ज्ञकं पृथिव्यादिकार्य्यद्रव्यमित्यनुवर्त्तते, तत् पञ्चा-

त्मकं=पञ्चभूतात्मक=पञ्चभूतसंयोगासमवायिकारणकमिति यावत् न विद्यते=न भवति, कुतः? प्रत्यक्षाप्रत्यक्षाणां=प्रत्यक्षाप्रत्यक्षद्रव्याणां संयोगस्य=परस्परसंयोगसम्बन्धस्याप्रत्यक्षत्वात्=प्रत्यक्षत्वाभावनियमात् प्रत्यक्षाप्रत्यक्षद्रव्यसंयोगासमवायिकारणकस्य तस्याप्रत्यक्षापत्तेरित्यर्थः।

**यथा** प्रत्यक्षाप्रत्यक्षाणां वायुवनस्पतीनां संयोगो न प्रत्यक्षः, तथा प्रत्यक्षाप्रत्यक्षद्रव्यसंयोगात्मकत्वाद् शरीरादिकार्य्यद्रव्यमपि प्रत्यक्षं न स्यात्, प्रत्यक्षं च विद्यते, तस्मान्न तदेकैकं पञ्चभिरारभ्यते, किन्त्वेकैकेन। तत्र पृथिव्यप्तेजांसि प्रत्यक्षाणि, वायुराकाशं चेति द्वयमप्रत्यक्षमिति भावः ॥२॥

**ननु** नैतत्संयोगात्मकम्, अपि च संयोगारभ्यम्, अतस्तस्य प्रत्येकं पञ्चात्मकत्वेऽपि न कश्चिद्दोषः, तत्राह—

**"गुणान्तराभावाच्च ॥ ३ ॥**

शरीरेन्द्रियविषयसंज्ञकं पृथिव्यादिकार्य्यद्रव्यं पञ्चात्मकं न विद्यते इति सूत्राभ्यामनुवर्तते। पञ्चात्मकत्वाभावे हेत्वन्तरमेतदिति सूचनाय चकारः। शरीरेन्द्रियादिकं पञ्चात्मकं न विद्यते। कुतः? गुणान्तराप्रादुर्भावात्=कारणगुणादन्यो गुणो गुणान्तरं, तस्याप्रादुर्भावोऽनुत्पादः, तस्मात्=गुणान्तरोत्पादानाश्रयत्वादित्यर्थः।

**चेदेतत्** पञ्चभूतसंयोगारभ्यं भवेत्; **तदा**ऽवश्यं हरिद्राचूर्णसंयोगारब्धे द्रव्ये लौहित्यवदत्र गुणान्तरं प्रादुर्भवेत्। न चेह किञ्चिद् गुणान्तरं प्रादुर्भवदुपलभ्यते। तस्मात्प्रतिपद्यते—नेदं पञ्चात्मकमिति भावः ॥ ३ ॥

**ननु** मा भूत् पञ्चात्मकं, त्र्यात्मकं भविष्यति; तत्राह—

**"न त्र्यात्मकम् ॥ ४ ॥**

शरीरेन्द्रियविषयसंज्ञकं पृथिव्यादिकार्य्यद्रव्यं गुणान्तराप्रादुर्भावाच्चेत्यनुवर्तते। गुणान्तराप्रादुर्भावाद् शरीरादिकार्य्यं त्र्यात्मकमपि न विद्यते इत्यर्थः।

**यथा** गुणान्तरोत्पादानाश्रयत्वाद् शरीरादिकार्य्यं पञ्चात्मकं नोपपद्यते, **तथा** भूजलज्योतिरात्मकमपि नोपपद्यते इति भावः ॥ ४ ॥

**नन्वेवं** चेत् तदा गन्धवदत्र क्लेदपाकव्यूहावकाशाः जलज्योतिरनिलाकाशधर्माः नोपलभ्येरन्, तत्राह—

**"अणुसंयोगस्त्वप्रतिषिद्धः ॥ ५ ॥**

तुशब्देनासमवायिकारणलक्षणं संयोग व्यवच्छिनत्ति । शरीरादिकार्य्येऽणुसंयोगस्तु=जलादीनामारम्भकत्वाभावेऽप्युपष्टम्भकत्वाभ्युपगमान्निमित्तकारणलक्षणस्तत्परमाणुसंयोगसम्बन्धस्त्वप्रतिषिद्धः=नास्माभिः पूर्वसूत्राभ्यां प्रतिषिद्धः=निषिद्ध इत्यर्थः ।

एकैकद्रव्यारब्धे शरीरादिकार्य्ये द्रव्यान्तराणामारम्भकत्वानभ्युपगमेनासमवायिकारणलक्षणः संयोगः प्रतिषिध्यते, न निमित्तकारणलक्षणः संयोगोऽपि । तेषामुपष्टम्भकत्वाभ्युपगमात् । अतस्तत्र तद्धर्मोपलब्धावपि न कश्चिद्दोष इति भावः ।

**तत्र** क्लेदः क्षरणं, पाकः औष्ण्यं, व्यूहः क्रिया, मुखादावन्नादिगत्यप्रतिबन्धः अवकाश इति विवेकः ॥ ५ ॥

**शरीरं** विभजते—

**"तत्र शरीरं द्विविधं योनिजमयोनिजं च ॥ ६ ॥**

तत्र=शरीरेन्द्रियविषयेषु शरीरं=यच्छरीरसंज्ञकं कार्य्यद्रव्यं तद् योनिजमयोनिजं च=शुक्रशोणितयोः सन्निपातो योनिः, तज्जन्यं योनिज, तद्विपर्य्ययाज्जातमयोनिजं चेति द्विविध=द्विप्रकारमित्यर्थः ।

**तत्राप्यं** तैजसं वायवीयमयोनिजं, पार्थिवं योनिजमयोनिजं चेति प्रशस्तदेवः । योनिजं द्विविधं—जरायुजमण्डजं च । गर्भवेष्टनचर्मपुटक जरायुः, तज्जत्वान्मानुषपशुमृगाणां शरीरं जरायुजम् । अण्डं विम्बः, तज्जत्वात्पक्षिसरीसृपाणां शरीरमण्डजम् । अयोनिजं चतुर्विधं—साङ्कल्पिक, सांसिद्धिकं, स्वेदजमुद्भिज्जं च । प्रजापतिसङ्कल्पात्सर्गादौ जातानां महर्षीणां पश्वादीनां च शरीरं साङ्कल्पिकम्, योगसिद्धिसिद्धं योगिनां शरीरं सांसिद्धिकम्, दंशमशकादीनां शरीरं स्वेदजम्, तरुगुल्मादीनां शरीरमुद्भिज्जमिति विवेकः ॥ ६ ॥

**ननु** सर्गादावुत्पन्नानां जीवात्मनामयोनिजाः शरीरभेदाः भवन्तीति नानुजानीमः, तत्कारणानिरूपणात्; तत्राह—

**"अनियतदिग्देशपूर्वकत्वात् ॥ ७ ॥**

सन्त्ययोनिजा इत्यग्रिमसूत्रमाकृष्यते। हेतूनां प्रतिज्ञासाकाङ्क्षत्वात्। न नियतौ=निश्चितौ निरवयवत्वव्यापकत्वाभ्यां दिग्देशौ=दिक् च देशश्च तौ येषां भूतसूक्ष्माणां, ते पूर्वे=कारणं येषां शरीरभेदानां, तेषां भावस्तत्त्वं, तस्मात्=आरम्भकक्रमेण भूतसूक्ष्मकारणकत्वादयोनिजाः=योनिमन्तरा सर्गादौ जायमानाः शरीरभेदाः सन्ति=भवन्तीत्यनुज्ञातव्यमित्यर्थः॥ ७॥

**नन्वारम्भकक्रमेण** भूतसूक्ष्मकारणकाश्चेत्, तदा समानकारणकत्वाद् घटादिभ्यो विलक्षणास्ते न जातु प्रादुष्ष्युः, तत्राह—

"**धर्मविशेषाच्च॥ ८॥**

चकारेणाधर्मविशेषं समुच्चिनोति। न च ते केवलाद् भूतसूक्ष्मात्कारणात्प्रादुर्भवन्ति, येन घटादिभ्यो विलक्षणाः न प्रादुष्ष्युः, अपि च धर्मविशेपाच्च=विशिष्यते इति विशेषः, धर्म एव विशेषः=धर्मविशेषः=प्रकृष्टो धर्म इति यावत्, तस्मात्=प्रकृष्टधर्मसहितादधर्मविशेषसहिताच्च भूतसूक्ष्मात्कारणादित्यर्थः।

**तत्र** धर्मविशेषसहितात्सर्गादिभुवां महर्षीणां शरीराणि जायन्ते, अधर्मविशेषसहकृताच्चाधुनाप्यनिशं जायमानानां क्षुद्रजन्तूनां दंशमशकादीनां, धर्माधर्मसहकृताच्च पश्वादीनामिति विवेकः॥ ८॥

**ननु** कुतश्चैतदवगम्यते पश्वादिवन्महर्षीणामयोनिजाः शरीरभेदाः सन्तीति? तत्राह—

"**समाख्याभावाच्च॥ ९॥**

सन्त्ययोनिजा इति पूर्ववदाकर्षः। पूर्वोक्तहेतुद्वयापेक्षया चः। यौगिकी संज्ञा समाख्या, तस्याः सद्भावो भावः, तस्माच्च=महर्षीणां वेदोक्तायाः "मनुरग्निर्वायुः" इत्यादियौगिकसंज्ञायाः सद्भावाच्च "सन्त्ययोनिजास्तच्छरीरभेदाः" इति भवत्यनुमानादवगम इत्यर्थः।

**न हि** महर्षीणां वेदोक्ता सा सा संज्ञा मातापितृभ्यां कृता भवति, येन तेषा योनिजाः शरीरभेदाः सिध्येयुः। अपि च वेदवचनेन जगदीश्वरेण, तादृक्संज्ञासद्भावस्य वेदेष्वेव नियमेन दर्शनात्, तत्प्रवृत्तेश्च तत एव स्मरणात्। अतोऽवगम्यते—न योनिजास्तावत् तच्छरीरभेदाः सन्ति, किन्त्वयोनिजा इति भावः॥ ९॥

**ननु** महर्षिभिः पश्वादीनां गौरश्वो हस्ती सिंह इत्यादिसंज्ञावत् तेषां संज्ञापि वेदान् दृष्ट्वा तन्मातापितृभ्यामेव कृता किन्न स्यात्, तत्राह—

**"संज्ञाया आदित्वात् ॥ १० ॥**

संज्ञायाः=महर्षीणां तत्तत्संज्ञायाः आदित्वात्=प्रथमत्वादित्यर्थः ।

**सर्गा**दिभुवो हि महर्षयो, न ततः पूर्वं कस्यचित्सर्गोऽभूत्, कुतस्तन्मातापितरौ स्यातां, कुतश्च वेदान् दृष्ट्वा तत्कृता संज्ञेति भावः ॥१०॥

निगमयति—

**"सन्त्ययोनिजाः ॥ ११ ॥**

तस्मात्सर्गादिभुवां महर्षीणां पश्वादीनां चायोनिजाः=योनिमन्तरेण जायमाना. शरीरभेदाः सन्ति=भवन्तीत्यर्थः ॥ ११ ॥

**ननु** लौकिकैर्लिङ्गैः सिद्धमपि सर्गादिभुवां महर्षीणां पश्वादीनां च शरीराणामयोनिजत्वं वेदप्रमाणासिद्धत्वात्कथ वैदिकानामुपादेयं स्यात्? तत्राह—

**"वेदलिङ्गाच्च ॥ १२ ॥**

सन्त्ययोनिजा इति पूर्वसूत्रमनुवर्तते । **"विश्वान् देवाञ्जगत्याविवेश । तेन चाक्लृपे ऋषयो मनुष्याः"** (ऋग्वे० अष्ट० ८।७ व० १८।५।) **"तस्मादश्वा अजायन्त ये के चोभयादतः । गावो ह जज्ञिरे तस्मात् तस्माज्जाता अजावयः"** (ऋग्वे० अष्ट० ८।४। व० १८।१०) इत्यादिवेदसामर्थ्याच्च सन्त्ययोनिजाः शरीरभेदा इत्यर्थः ॥ १२ ॥

**शरीरादिप्रभेदेन भूम्यादि त्रिविधं मतम् ।**
**शरीरं द्विविधं चास्मिन्नाह्निके विशदीकृतम् ॥ १ ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृतायां वैशेषिकसूत्रवैदिकवृत्तौ चतुर्थाध्यायस्य द्वितीयमाह्निकम् ।

समाप्तश्चायं प्रकृतिशरीराध्यायश्चतुर्थः ।

# अथ पञ्चमोऽध्यायः ।

## आद्यमाह्निकम् ।

परीक्षितानि द्रव्याणि, गुणेषु परीक्षणीयेषूपस्थितेषु शिष्यजिज्ञासामनुरुध्य तत्परीक्षातः पूर्वं कर्मपरीचिक्षिषया पञ्चमाध्यायमारभमाणः प्रथमन्तावदुत्क्षेपणलक्षणं कर्माधिकृत्याह—

**"आत्मसंयोगप्रयत्नाभ्यां हस्ते कर्म ॥ १ ॥**

आत्मसंयोगप्रयत्नाभ्यां=संयोगापेक्षया प्रयत्नस्याभ्यर्हितत्वेऽपि निमित्तकारणत्वान्न पूर्वप्रयोगः, आत्मनः=मनोविशिष्टस्य प्रत्यगात्मनः संयोगप्रयत्नाभ्यां=संयोगश्च, प्रयत्नश्च, ताभ्यां हस्ते=शरीरावयवे करे कर्म=उत्क्षेपणाख्यं कर्म भवतीत्यर्थः ।

**यदा** ह्ययं चिकीर्षितेषु यज्ञाध्ययनादिषु शरीरावयवं हस्तमुत्क्षेप्तुं कामयति, तदाऽस्यात्मनि तदनुकूल. प्रयत्नः संजायते, तमपेक्षमाणादात्महस्तसयोगाच्च तत्रोत्क्षेपणलक्षणं कर्मेति भाव· ।

**इदमत्र बोध्यं**—यद्यप्यात्मनोऽणुत्वाद् हृदयस्थतया हस्तादिना साक्षात्सयोगो न सम्भवति, तथापि मनसो मध्यमपरिमाणत्वात् तद्विशिष्टस्य तस्य न तत्संभवाभाव इति ।

**तत्र** समवायिकारणं हस्तः **"कारणमिति द्रव्ये कार्य्यसमवायात्"** (वै. अ. १० आ. २–सू. १) इति वक्ष्यमाणात् । असमवायिकारणं प्रयत्नवदात्मसंयोगः, कारणैकार्थसमवायात् । निमित्तकारणं प्रयत्न इति विवेकः ॥ १ ॥

हस्तोत्क्षेपणमुक्त्वा तदधीनं मुषलोत्क्षेपणमाह—

**"तथा हस्तसंयोगाच्च मुषले कर्म ॥ २ ॥**

चकारेण गुरुत्वं समुच्चिनोति । तथा हस्तसंयोगाच्च=उत्क्षेपणवद्धस्तसंयोगाद् गुरुत्वाच्च मुषले=यज्ञादिषूपयुक्ते धान्यादिकण्डनसाधने मुसले कर्म=उत्क्षेपणं कर्मोत्पद्यते इत्यर्थः

**यदा** हस्तेन मुशलं गृहीत्वा कामयति "हस्तेनोत्क्षिपामि मुशलम" इति

तदा तत्कामनया जायमानं प्रयत्नमपेक्षमाणादात्महस्तसंयोगाद् यस्मिन् क्षणे हस्ते तस्मिन्नुत्क्षेपणं कर्म संजायते । तस्मिन्नेव क्षणे तमेव प्रयत्नमपेक्षमाणादुत्क्षेपणवद्धस्तमुशलसयोगान्मुशलेऽप्युत्क्षेपणं कर्मोत्पद्यते । ततो दूरमुत्क्षिप्ते मुशले तदिच्छानिवृत्तौ पुनरपक्षेपणेच्छायामुत्पन्न प्रयत्नमपेक्षमाणादात्महस्तसयोगाद् हस्ते तथाभूतहस्तमुशलसंयोगाच्च मुशले युगपदपक्षेपणं कर्म समुत्पद्यत इति भाव ।

**तत्र** शरीरावयवेपु तत्संबद्धेपु च मुशलादिपु यदूर्ध्वभाग्भिः प्रदेशैः संयोगकारणमधोभाग्भिश्च प्रदेशैर्विभागकारण प्रयत्नसंयोगगुरुत्वेभ्यः कर्मोत्पद्यते तत् **उत्क्षेपणं**। तद्विपर्य्ययेण च संयोगविभागकारणं यत्कर्मोपजायते तत् **अपक्षेपणम्** । उभयस्मिंश्चास्मिन् मुशलादिकर्मणि मुशलादिकं समवायिकारणम् । उत्क्षेपणवद्धस्तमुशलादिसंयोगोऽसमवायिकारणम् । प्रयत्नो गुरुत्वं च निमित्तकारणम् । सत्यपि प्रयत्ने गुरुत्वरहितस्योत्क्षेपणापक्षेपणयोरसंभवाद् गुरुत्वस्यापि तत्र प्रयत्नवन्निमित्तकारणत्वमिति विवेकः ॥ २ ॥

**ननु** यदोलूखलादिकमभिहत्य मुशलादिकमुत्पतति, तदा तस्योत्पतने कर्मणि किं पूर्ववद् हस्तसंयोगोऽपि कारणं भवति? तत्राह—

**"अभिघातजे मुशलादौ कर्मणि व्यतिरेकादकारणं हस्तसंयोगः ॥ ३ ॥**

अभिघातजे=मुशलादेरुदूखलादिना योऽभिघाताख्यः संयोगसंबन्धविशेषस्तज्जन्ये मुशलादौ कर्मणि=मुशलादावुत्पतनकर्मणि हस्तसंयोगः=तथा हस्तसंयोगोऽकारणं=कारणं न भवति । कुतः? व्यतिरेकात्=तद्व्यतिरेकेऽपि जायमानत्वादित्यर्थः ।

**मुशलादिगतापक्षेपणलक्षणेन** कर्मणा तावदुलूखलमुशलप्रभृत्योरभिघाताख्यः संयोगः क्रियते । सच मुशलादिगतं वेगमपेक्षमाणो मुशलादावन्तरेण प्रयत्नमुत्पतनलक्षणं कर्म करोति । तस्मिंश्च कर्मणि हस्तसंयोगो नासमवायिकारणम् । अन्यथासिद्धत्वात् । नापि प्रयत्न । अपिचाभिघाताख्यः सयोगः । तेनैव तदुत्पत्तेः । मुशलादिकं तु समवायिकारणं । निमित्तकारणं च वेग इति भावः ॥ ३ ॥

अतिदिशति—

"तथाऽऽत्मसंयोगो हस्तकर्मणि ॥ ४ ॥

व्यतिरेकादकारणमित्यनुवर्तते । तथा=यथाऽभिघातजे मुशलादिकर्मणि हस्तसंयोगो न कारणं, तथा हस्तकर्मणि=मुशलादिनोत्पतता सहोत्पततो-हस्तस्योत्पतने कर्मण्यात्मसंयोगः=प्रयत्नवदात्मसंयोगो व्यतिरेकादकारणमित्यर्थः ॥ ४ ॥

**ननु** कस्मात्तर्हि हस्ते तदोत्पतनं कर्म जायते? तत्राह—

"अभिघातान्मुषलसंयोगाद्धस्ते कर्म ॥ ५ ॥

अभिघातात्=उदूखलाभिघातान्मुपलसंयोगात्=जातवेगेन मुषलेन सह संयोगाद्धस्ते कर्म=उत्पतनं कर्म भवतीत्यर्थः ।

उदूखलाद्यभिघाताज्जायमानं मुषलादेरुत्पतनं कर्म मुषलादौ तावद्वेगाख्यं संस्कारमारभते, तत्सहकृतश्च मुषलादिसंयोगः स्वाश्रये हस्तेऽप्युत्पतनाख्यं कर्म प्रारभते। तदा चोत्पतता मुषलादिना सह तन्मुखस्थलोहवदवश. सन् हस्तोऽप्युत्पतति । तत्रच न प्रयत्नवदात्मसंयोगोऽसमवायिकारणम् । अपिच हस्तमुशलादिसंयोग । निमित्तकारणं च वेगाख्यः संस्कार इति भावः ॥ ५ ॥

**ननु** यदोलूखलाद्यभिघाताज्जातवेगेन मुशलादिना संयोगाद् हस्ते कर्मोत्पद्यते, तदा तदवयविनि शरीरेऽपि कर्म दृश्यते, तत्कुतो भवति? तत्राह—

"आत्मकर्म हस्तसंयोगाच्च ॥ ६ ॥

हस्तसंयोगाच्च=वेगसमुच्चयाय चः, शरीरावयवस्य हस्तस्य वेगवता मुशलादिना यः संयोगस्तस्माद् वेगाच्चात्मकर्म=आत्मनि=शरीरे कर्म भवतीत्यर्थः।

**यत्र** वेगेनोत्पतता मुशलादिना दृढतरसंयुक्तहस्तः पुरुषोऽपि सह तेनोत्पतति, तत्र तदुत्पतनं वेगसहकृताद् हस्तसंयोगादेव भवति, न कारणान्तरादिति भावः ॥ ६ ॥

**ननु** भवतु गुरुत्ववतः पदार्थस्य संयोगविशेषादुत्क्षेपणापरपर्य्यायमुत्पतनम् । अपक्षेपणापरपर्य्यायं पतनं पुनरुच्चैः स्थितस्य तादृशस्तस्य कथं भवेत्? तत्राह—

**"संयोगाभावे गुरुत्वात्पतनम् ॥ ७ ॥**

संयोगाभावे=पतनहेतुगुरुत्वविधारकतया पतनप्रतिबन्धकस्य संयोगविशेषस्याभावे सति गुरुत्वात्=तदानीमप्रतिबद्धादसमवायिकारणाद्गुरुत्वात्पतनम्=उत्पततस्तस्यापक्षेपणं भवतीत्यर्थः ।

**तत्र**ाद्यं पतनं गुरुत्वाद्, द्वितीयादीनि तु तानि गुरुत्ववेगाभ्यामिति विवेकः ॥ ७ ॥

**ननु** कस्माद्गुरुत्वात्पतनमेवभवति नोर्ध्वगमनं न तिर्य्यग्गमनं? तत्राह—

**"नोदनविशेषाभावान्नोर्ध्वं न तिर्य्यग् गमनम् ॥ ८ ॥**

नोदनविशेषाभावात्=संयोगसम्बधविशेषो नोदनः, तद्विशेषस्तरतमादिः, तस्याभावाद् नोर्ध्वम्=ऊर्ध्वगमनं न भवति, न तिर्य्यग्गमनं=तिर्य्यगगमनञ्च न भवतीत्यर्थः ।

ऊर्ध्वगमने तिर्य्यग्गमने च नोदनविशेषसहकृतं गुरुत्वं कारणं, पतने च प्रतिबन्धकाभावे सति केवलं गुरुत्वमिति भावः ॥ ८ ॥

**ननु** नोदनविशेषः कुतो भवति? तत्राह—

**"प्रयत्नविशेषान्नोदनविशेषः ॥ ९ ॥**

प्रयत्नविशेषात्=ऊर्ध्वं तिर्य्यग् दूरमासन्नमेतत् क्षिपामीति कामनाविशेषजनितात्प्रयत्नविशेषान्नोदनविशेषः=नोदकस्य हस्तज्यादेर्नोद्यस्य च लोष्ठशरादेः संबन्धविशेषलक्षणो नोदनविशेषो भवतीत्यर्थः ॥ ९ ॥

**ननु** भवतु प्रयत्नविशेषान्नोदनविशेषः, गुरुणो द्रव्यस्योर्ध्वतिर्य्यग् गमने किमायातं? तत्राह—

**"नोदनविशेषादुदसनविशेषः ॥ १० ॥**

नोदनविशेषात्=प्रयत्नविशेषजनितान्नोदनविशेषादुदसनविशेषः=गुरुणो द्रव्यस्य दूरोत्क्षेपणादिकं भवतीत्यर्थः ।

**तत्रो**दसनमुत्क्षेपणं, तद्विशेषो दूरोत्क्षेपणं दूरतरोत्क्षेपणं, तिर्य्यग्गमनलाभः प्रकरणादिति विवेकः ॥ १० ॥

**ननु** नोदनविशेषाच्चेदुदसनविशेषः, तदा क्रीडतो दारकस्योर्ध्वतिर्य्यक्

करचरणादिचालनलक्षणं कर्म=उदसनविशेषो नोपपद्येत, नोदनविशेषाभावेऽपि जायमानत्वात्, तत्राह—

**"हस्तकर्मणा दारककर्म व्याख्यातम् ॥ ११ ॥**

हस्तकर्मणा=लोष्ठाद्युत्क्षेपणकालकेनात्मसंयोगप्रयत्नाभ्यां जनितेन हस्तकर्मणा दारककर्म=क्रीडतो बालकस्य करचरणादिचालनलक्षणं कर्म व्याख्यातम्=उपपादितं वेदितव्यमित्यर्थः ।

**यथाहि** लोष्ठादेरुत्क्षेप्तुः पुरुषस्य हस्तोत्क्षेपणादिकं कर्म प्रयत्नविशेषजनितमपि न नोदनविशेषजनितम् । तथा दारकस्यापि कर्म विज्ञेयम् । नोदनविशेषस्योदसनविशेषे हेतुत्वेऽपि यावदुदसने कर्मणि हेतुत्वानभ्युपगमादिति भाव. ॥ ११ ॥

**नन्वस्त्यन्यदपि** किंचिदीदृशं कर्म, यन्नोदनमात्रजनितमपि नोदनविशेषजनितं न स्यात्? तत्राह—

**"तथा दग्धस्य विस्फोटने ॥ १२ ॥**

दग्धस्य=वह्निसंयोगेन दग्धकल्पस्याश्मफलादेर्विस्फोटने=विपाटने सति यत्तदवयवानामूर्ध्वाधस्तिर्य्यग्गमनादिलक्षणं कर्म, तत् तथा=दारककर्मवन्नोदनविशेषाजनितमित्यर्थः ।

**तत्र** प्रयत्नपूर्वकं दारककर्म, नोदनमात्रपूर्वकं त्वश्मफलादिखण्डानां कर्म, नोदनविशेषाजन्यत्वं च समानमुभयत्रेति विवेकः ॥ १२ ॥

**ननु** यदाऽयं प्रसुप्त्यादौ न किंचिच्चेतयति, तदापि कदाचिद् चलन् दृश्यते, तदस्य चलनं प्रयत्नाभावे कथं भवेत्? तत्राह—

**"यत्नाभावे प्रसुप्तस्य चलनम् ॥ १३ ॥**

वायुसंयोगादित्यग्रिमसूत्रादाकृष्यते । यत्नाभावे=प्रयत्नाभावे प्रसुप्तस्य=प्रसुप्तिरत्राचेतनावस्थामुपलक्षयति, तेन मूर्च्छितस्य मृतस्य च सङ्ग्रहः, प्रसुप्त्यादिदशाविशेषमापन्नस्य चलनं=यदकस्मात्कादाचित्कं चलनं, तद् वायुसंयोगात्=वायुविशेषसंयोगाद् भवतीत्यर्थः ॥ १३ ॥

**वायुसंयोगजमपरं** कर्माह—

**"तृणे कर्म वायुसंयोगात् ॥ १४ ॥**

तृणे=तृणादौ कर्म=यदूर्ध्वतिर्य्यग्गमनलक्षणं कर्म, तद् वायुसंयोगात्=आधिभौतिकवायुसम्बन्धाद्भवतीत्यर्थः ॥ १४ ॥

**ननु** यत्र मण्यादेरभिसर्पणे प्रयत्नादिकं दृष्टं कारणं किमपि नोपलभ्यते, तत्कि कारणकं स्यात्? तत्राह—

**"मणिगमनं सूच्यभिसर्पणमदृष्टकारणम् ॥ १५ ॥**

मणिगमनं=तृणविशेषस्य यत् तृणकान्तमणि प्रत्यभिसर्पण कर्म, यच्च सूच्यभिसर्पणं=लोहमयस्य सूच्यादेरयस्कान्तमण्यभिमुखगमनं कर्म, तदृदृष्टकारणं=दृष्टविलक्षणवस्तुशक्तिभूतादृष्टकारणकमित्यर्थः ।

**यत्** तृणजातीयं तृणकान्तमयश्चायस्कान्त मणिमभिसर्पति । तत्र तच्छक्तिः कारणं । साच मणिसन्निधानादुद्बुध्यते । प्रयत्नादिवच्च न दृश्यते । कार्य्यानुमेयत्वात् । अतः सूत्रितमदृष्टकारणमिति भावः ।

**तत्र** तृणादिकं समवायिकारणं । तेन च मणिसंयोगविशेषोऽसमवायिकारणम् । अदृष्टं निमित्तकारणमिति विवेकः ।

सुकृतं दुष्कृतं चेहादृष्टमिति सर्वे शङ्करमिश्रप्रभृतयो व्याख्यातारः॥१५॥

**ननु** कर्मणश्चतुःक्षणमात्रस्थायित्वेन पञ्चमे क्षणे नाशावश्यंभावाद्ज्याविभक्तस्येषोर्यावत्पतनमनेकानि कर्माणि मध्ये जायन्त इति वक्तव्यं, तन्न वक्तुं शक्यते, तदनेकत्वे लिङ्गानुपलब्धेस्तत्राह—

**"इषावयुगपत्संयोगविशेषाः कर्मान्यत्वे हेतुः ॥ १६ ॥**

इषौ=ज्याविभक्ते बाणे कर्मान्यत्वे=यावत्पतनं मध्ये जायमानेऽनेकस्मिन् कर्मण्ययुगपत्संयोगविशेषाः=भिन्नभिन्नसमये जायमानाः स्वजन्योत्तरोत्तरसंयोगविशेषाः हेतुः=लिङ्गमित्यर्थः ।

क्षिप्तस्येषोरन्तराले पतनात्पूर्वं तत्तद्देशेन बहवः संयोगास्तावदनुभूयन्ते । तेच "पूर्वं कर्मोत्पत्तिः, अथविभागः, तदनु पूर्वसंयोगनाशः, ततश्चोत्तरसंयोगः" इति जायमानात्कर्मणश्चतुर्थे क्षणे भवन्ति । पञ्चमक्षणे च स्वजनकं कर्म नाशयन्तीति संप्रतिपन्नम् । नचामी युगपद् जायन्त इति कल्पना युज्यते । सम्भवाभावात् । अपि चायुगपदिति मन्तव्यम् । नह्ययुगपद् बहुसंयोगोत्पत्तिरेकेन कर्मणा संभवति । तदसम्भवे च सुखेनानेककर्मसिद्धि-

रिति भवत्ययुगपत्संयोगविशेषाः कर्मान्यत्वे हेतुरिति भावः ॥ १६ ॥

**ननु** कस्मात्कस्मात्कारणादापतनं बाणेऽनेकं कर्मोत्पद्यते? तत्राह—

**"नोदनादाद्यमिषोः कर्म, तत्कर्मकारिताच्च संस्कारादुत्तरं तथोत्तरमुत्तरं च ॥ १७ ॥**

नोदनात्=नोदनाख्यादिषु ज्यासंयोगविशेषादिषोः=निष्ठाषष्ठीयम्, इषुनिष्ठमाद्यं=प्राथमिकं कर्म=गमनलक्षणं कर्म जायते, तत्कर्मकारिताच्च=आद्यकर्मजनिताच्च संस्कारात्=वेगाख्यसंस्कारादुत्तरं=द्वितीयं कर्म । तथोत्तरं=यथाद्यकर्मकारितात्संस्काराद् द्वितीयं, तथैवाद्यकर्मकारितात्संस्कारात्तदुत्तरं तृतीयम् । उत्तरं च=तदुत्तरं तुरीयं च पञ्चमं चापतनमनेकं कर्म जायत इत्यर्थः ।

**यदा** हि ज्या प्रयत्नेनाकृष्यते, तदा तत्र कर्मोत्पद्यते । तच्चोत्पन्नं ज्यायां वेगाख्यं संस्कारमारभते। तं च संस्कारमपेक्षमाणो योऽयमिषुज्यासंयोगः स नोदनं । तस्मादेव नोदनादिषोराद्यं कर्म भवति । तत्र समवायिकारणमिषुः, असमवायिकारणं नोदनं, प्रयत्नो गुरुत्वं च निमित्तकारणम् । तच्च नोदनापेक्षमिषौ वेगाख्यसंस्कारमारभते । तेन चेषुज्याविभागानुकूलं कर्म । ततश्चेषुज्याविभागः । ततश्च नोदननिवृत्तिः । तदनु चाद्यकर्मकारिताद्वेगाख्यसंस्कारादेव तावत्कर्माणि भवन्ति, यावन्नेषुर्भूतले पतति। तत्र च सर्वत्रासमवायिकारणमेक एव प्राथमिकः संस्कार इति भावः ॥ १७ ॥

**नन्वेक** एव संस्कारश्चेत्कर्मसन्तानजनकः, तदेषुः कदापि न पतेत् । तत्राह—

**"संस्काराभावे गुरुत्वात्पतनम् ॥ १८ ॥**

संस्काराभावे=कर्मसन्तानलक्षणबहुकार्य्यकरणात्क्षीणशक्तितया प्रतिबन्धकीभूतस्य वेगाख्यसंस्कारस्य नाशे सति गुरुत्वात्=तदानीमप्रतिबद्धादिषुगताद् गुरुत्वात्पतनम्= इषोरधःप्रदेशसंयोगजनकं कर्म भवतीत्यर्थः ।

**तदा** हि कदाचिदिषुर्न पतेत्, चेत्कर्मसन्तानजनकः संस्कारो न कथंचिदपक्षीयेत, सर्वदा चैकरसमनुवर्तेत । नच स तथानुवर्तते । अपिच यथा यथा कर्मात्मकं कार्य्यं करोति, तथा तथाऽस्य कार्य्यकरणशक्तिरप-

क्षीयते । यथा यथा च शक्तिरपक्षीयते । तथा तथाऽस्य कार्य्यं मन्दतरतमादिभेदभिन्नमुपजायते । यथा तरुणस्य शाखिनः फलं प्रकृष्यते, जीर्णस्य चापकृष्यते । सर्वथा चायमपक्षीयमाणशक्तिकोऽन्ते स्वयमेव नश्यति । तन्नाशे चेषुरवशमात्मगताद्गुरुत्वात्पतति । गुरु ह्याकृष्यते पृथिव्येति नियमात् । यथाचेह, तथा क्षिप्ते लोष्ठादावपि द्रष्टव्यं, समानत्वादिति भावः ॥ १८ ॥

**प्रयत्नपूर्वकं कर्म यादृशं लोकसंमतम् ।**
**तथा प्रासङ्गिकं चास्मिन्नाह्निके साधु वर्णितम् ॥ १ ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृतायां वैशेषिकसूत्रवैदिकवृत्तौ पञ्चमाध्यायस्याद्यमाह्निकम् ।



# अथ पञ्चमोऽध्यायः ।

## द्वितीयमाह्निकम् ।

आत्माधिष्ठितेषु शरीरावयवेषु तत्सम्बद्धेषु च मुषलादिषु यन्त्रविशेषेषु प्रयत्नादितो जायमानमुत्क्षेपणापक्षेपणादिलक्षण कर्म परीक्षितम् । संप्रति पृथिव्यादिषु द्रव्येषु नोदनादितो जायमानं गमनादिलक्षणं कर्म परीक्षितु-कामः पूर्वं पृथिव्यान्तावत्तज्जन्यं कर्माह—

**"नोदनाभिघातात् संयुक्तसंयोगाच्च पृथिव्यां कर्म ॥१॥**

नोदनाभिघातात्=आभ्यन्तरवस्तूनां नोदनाभिघाताख्यसंयोगात्, संयु-क्तसंयोगाच्च=वस्तुसंयुक्तपृथिवीसयोगाच्च पृथिव्यां=भूभूधरादिरूपायां पृ-थिव्यां कर्म=भूकम्पादिनामकं गमनविशेषात्मकं कर्म भवतीत्यर्थः ।

गुरुत्वद्रवत्ववेगादीन् समस्तान् व्यस्तान् वा गुणानपेक्षमाणो नोद्यनोद-कयोः संयोगिनोरुभयोरविभागकृत' कर्मणः कारणं य' संयोगविशेषः स नो-दनं, **किमुक्तं**? येन सयोगविशेषेण जनितं कर्म संयोगिनोरुभयोः परस्परं विभागं न करोति, तन्नोदनं, **किंबहुना** यः सयोगविशेषः शब्दनिमित्त-कारणं न भवति, स्पर्शवद्द्रव्यसंयोग इति यावत्, स नोदनाख्यः सयोगः।१। वेगमात्रमपेक्षमाणोऽभिघात्याभिघातकयोरुभयोर्विभागकृतः कर्मणः कारणं यः संयोगविशेषः, सोऽभिघातः, **किमुक्तं**? येन संयोगविशेषेण जनितं कर्म संयोगिनोरुभयोः परस्परं विभागं करोति, स्वयञ्चोत्पन्नः शब्दं जनयति, सोऽ-भिघातः, **किंबहुना** स्पर्शवेगोभयवद्द्रव्यसंयोगोऽभिघाताख्यः संयोगः।२। आभ्यन्तरवस्तुभिर्नुद्यमानायाः अभिहन्यमानाया' वा पृथिव्याः यः स्वोपरि-तिष्ठद्भिर्भूधरादिभिर्नोदनाभिघातयोरन्यतरापेक्षो वा तदुभयापेक्षो वा संयो-गविशेषः, स संयुक्तसंयोगः, **किंबहुना** कर्माजन्यसंयोगः, सयुक्तस्य संयोग इति यावत्, स संयुक्तसंयोगः । ३ । तत्र पृथिव्यास्तावद् ये प्रदेशा आ-भ्यन्तरवस्तुभिर्नुद्यन्ते वाऽभिहन्यन्ते वा, तेषु यत्कर्म भवति, तन्नोदनाद्वाऽ-भिघाताद्वा जायते, तेषामेव नुद्यमानानां वाऽभिहन्यमानानां वा भूप्रदेशाना संयोगादनुद्यमानेषु वाऽनभिहन्यमानेषु वा प्रदेशेषु, नुद्यमानाभिहन्यमान-

प्रदेशानामुपरिस्थितेषु भूधरादिषु, पदार्थेषु वा तथाभूतेषु, यत्कर्म भवति, तत्संयुक्तसंयोगादिति भावः ।

**तत्र** नोदनाभिघातजन्ये कर्मणि नोदनाभिघातौ यथासंभवमसमवायिकारणम् । संयुक्तसंयोगजे च कर्मणि संयुक्तसंयोगः । गुरुत्वद्रवत्ववेगादयस्तु यथासंभवं निमित्तकारणं । यत्र कर्म सा पृथिवी समवायिकारणमिति विवेकः ॥ १ ॥

**ननु** यदेतत्स्वाक्षं वा विवस्वानं वा परितो भ्रमन्त्यां पृथिव्यां गमनात्मकं कर्म, तत्कुतो जायते ? तत्राह—

**"तद्विशेषेणादृष्टकारितम् ॥ २ ॥**

विशेषेण=स्वाक्षं वा विवस्वानं वा परितो भ्रमन्त्याः पृथिव्याः यत्प्रत्यहं विशेषरूपेण गमनात्मकं कर्म, तत्=तत्कर्मादृष्टकारितम्=जीवादृष्टैः कारितत्वाददृष्टं वस्तुशक्तिः, तज्जनितमित्यर्थः ।

**कर्म**वैचित्र्यात्सृष्टिवैचित्र्यमिति हि वैदिकानां राद्धान्तः । अतो जीवादृष्टकारिता वस्तुशक्तिरेवैतादृशी, यतः सूर्य्यमण्डलाकृष्टा खलु पृथिवीयमनिशं परिभ्रमतीति भावः ।

**तत्र** पृथिवी समवायिकारणम् । आकर्षणक्रियाप्रयोजकादित्यसंयोगविशेषोऽसमवायिकारणम् । अदृष्टं निमित्तकारणमितिविवेकः ॥ २ ॥

पृथिवीकर्म परीक्षितम् । अपां कर्म परीक्षयिष्यन्नुपक्रमते—

**"अपां संयोगाभावे गुरुत्वात्पतनम् ॥ ३ ॥**

अपां=संयोगेन मेघमण्डलस्थानामपां संयोगाभावे=वायुसंयोगात्कर्मोत्पत्त्या गुरुत्वविधारकतया पतनप्रतिबन्धकस्य मेघसंयोगस्योपरमे सति गुरुत्वात्=तदानीमप्रतिबद्धात्स्वगताद्गुरुत्वात्पतनम्=अधःप्रदेशसंयोगफलकं वर्षणात्मकं कर्म भवतीत्यर्थः ।

**तत्रापः** समवायिकारणं, गुरुत्वमसमवायिकारणं, संयोगाभावो निमित्तकारणमिति विवेकः ॥ ३ ॥

**ननु** भूमौ पतितानामपां परस्परसंयोगेन स्रोतस्तया स्थलान्निम्नाभिसर्पणलक्षणं यत्कर्म, तत् कुतो भवति ? तत्राह—

**"द्रवत्वात्स्यन्दनम् ॥ ४ ॥**

अपामित्यनुवर्तते। भूमौ वर्षानन्तरं स्रोतोभूतानामपां यत् स्यन्दनं=स्थलान्निम्नाभिसर्पणं, तद् द्रवत्वात्=स्वगतद्रवत्वगुणाद् भवतीत्यर्थः।

**तत्रा**पःसमवायि कारणं, द्रवत्वमसमवायिकारण, गुरुत्वं निमित्तकारणमिति विवेकः ॥ ४ ॥

**ननु** यत्नमन्तरेण भूमिष्ठानामपामन्तरिक्षारोहणं कुतो जायते, येन तास्तत्र धूमेन ज्योतिषा वायुना च संसृज्य मेघभावमापन्ना भूमौ पतन्ति? तत्राह—

**"नाड्यवायुसंयोगादारोहणम् ॥ ५ ॥**

अपामित्यनुवर्तते। नाड्यवायुसयोगात्=नाडीषु=सूर्य्यरश्मिषु भवो नाड्यः, नाड्यश्च वायुसंयोगश्च=नाड्यवायुसंयोग., तस्मादपामारोहणम्=अन्तरिक्षारोहणं भवतीत्यर्थः।

**वा**युसंयुक्ताःसूर्य्यरश्मयोऽपोभूमिष्ठास्तावदन्तरिक्षमारोहयन्तीति भावः॥५

**ननु** नाड्यवायुसयोगस्याप्स्वभावात् तेन तदारोहणं कथं भवति? तत्राह—

**"नोदनापीडनात्संयुक्तसंयोगाच्च ॥ ६ ॥**

निदर्शनार्थकश्चः। अपामारोहणमिति पदद्वयमनुवर्तते। नोदनापीड़नात्=बलवद्वायुनोदनेनापीडनात्=आस्कन्दनाल्लब्धजन्मनः संयुक्तसंयोगात्=वायुसंयुक्तसूर्य्यरश्मिसंयोगविशेषादपामारोहणं भवति, च=यथा बलवद्वायुनुन्नवह्निरश्मिभिः संयोगात्स्थालीस्थानां क्वथ्यमानानामपामित्यर्थः।

**यथा** हि स्थाल्यां क्वथ्यमानमुदकं बलिना मारुतेन नुन्नैस्तेजोरश्मिभिः संयोगादूर्ध्वमारोहति, तथैव बलिनो मारुतस्य नोदनेनापीड्यमानाभिः सूर्य्यनाडीभिः संयोगादापो भूमिष्ठास्तावदूर्ध्वमारोहन्तीति भावः।

**तत्रा**पः समवायिकारणम्, आद्यः संयोगो निमित्तकारणं, द्वितीयोऽसमवायिकारणमिति विवेकः ॥ ६ ॥

**ननु** वृक्षमूले निषिक्तानामपां यद् वृक्षाभ्यन्तरेणोर्ध्वगमनं तत्कुतो जायते, सूर्य्यनाडीभिस्तदूर्ध्वनयनासम्भवात्? तत्राह—

**"वृक्षाभिसर्पणमित्यदृष्टकारितम् ॥ ७ ॥**

अपामित्यनुवर्तते । मूले निषिक्तानामपां यद् वृक्षाभिसर्पणं=वृक्षमभितः सर्पणमिति=तददृष्टकारितं=जीवादृष्टैः कारितत्वाददृष्ट शक्तिविशेषः, तज्जनितं वेदितव्यमित्यर्थः ।

**यस्य** हि जीवात्मनः पत्रकाण्डपुष्पफलादिवृद्धिकृतेन सुखेन भवितव्यं, तददृष्टकृताच्छक्तिविशेषान्मूलमारभ्य यावदग्रं वृक्षनिविष्टः शिरासन्तानोऽपां पार्थिवरसानाञ्चाकर्षणं करोति, तेनैव स वृक्षो जीवति, नान्यथा जीवेत्, अतोऽदृष्टकारितमपां वृक्षाभिसर्पणं कर्मेति भावः ।

**तत्राप** समवायिकारणम् । अदृष्टवदात्मसंयोगोऽसमवायिकारणम् । अदृष्टं निमित्तकारणमिति विवेकः ॥ ७ ॥

**ननु** सांसिद्धिकद्रवा आपोऽन्तरिक्षमारूढाः कुतः संहन्यन्ते, येनेदं करकादिक पतति, कुत पुनर्भूमिष्ठाः सत्यो विलीयन्ते, येनेमाः स्यन्दन्ति ? तत्राह—

**अपां संघातो विलयनञ्च तेजःसंयोगात् ॥ ८ ॥**

अपां=मेघमण्डलस्थानामपां संघातः=हिमकरकादिभावलक्षणो दृढतरसंयोगविशेषो, विलयनञ्च=तद्विनाशलक्षणः, शिथिलाख्यसंयोगविशेषश्च, तेजःसयोगात्=प्रयोजकत्वं पञ्चम्यर्थः, दिव्यादिव्यतेजःसम्बन्धविशेषाद् भवतीत्यर्थः ।

अन्तरिक्षस्थास्वप्सु बलिनो दिव्यतेजसःसंयोगेन हि सामान्यतो वर्तमानमनुद्भूतरूपवत्तेजो द्रव्यं निःसार्य्यते, तन्निःसरणाच्च तासां द्रागित्येव सांसिद्धिक द्रवत्वं प्रतिरुध्यते, तत एव ताः परस्परं संहन्यन्ते, सहन्यमानानाञ्च तासां यदा पुनर्भूमौ पूर्वतो विजातीयेनादिव्येन तेजसा सयोगो जायते, तदा तेनाप्रतिबद्धद्रवत्वाः सत्यस्ता. विलीयन्ते इति भावः ॥ ८ ॥

**नन्वन्तरिक्षस्थास्वप्सु** दिव्यतेज.सयोगसद्भावे कि प्रमाण ? तत्राह—

**"तत्र विस्फूर्जथुर्लिङ्गम् ॥ ९ ॥**

तत्र=मेघमण्डलस्थास्वप्सु दिव्यतेजःसंयोगसद्भावे विस्फूर्जथुः=वज्रनिर्घोपो लिङ्गं=प्रमाणमित्यर्थ. ।

**चेत्** तत्र दिव्यतेज.संयोगो न भवेत्, तदाऽऽदौ विद्युत्प्रकाशोऽनन्तरं

विस्फूर्जथुस्तदनन्तरमेव च करकादिपातो न दृश्येत, दृश्यते च तथा, तस्माद् भवत्यनुमानं "विद्यते तत्र दिव्यतेजःसंयोगो येनैवं करकादिकं पतति" इति भावः ॥ ९ ॥

**ननु** कल्पनामात्रमेतद् नात्र किञ्चिद् वैदिकं प्रमाणमुपलभामहे, तत्राह—

**"वैदिकश्च ॥ १० ॥**

**"गर्भो यो अपाम्"** (ऋ. अष्ट. १—अ. ५—व. १४—मं. २) **'अग्ने गर्भो अपामसि"** (यजुः—अ. १२—मं. ३७) इत्यादिकं ादिकं प्रमाणञ्चेह वेदितव्यमित्यर्थः।

**तत्र** गर्भः=गर्भवदन्तर्वर्तीति विवेकः ॥ १० ॥

**ननु** यः शब्दः स सर्वः संयोगविभागपूर्वक इति नियमः, विस्फूर्जथुरपि ाब्दः, तेनापि संयोगविभागपूर्वकेणावश्यं भवितव्यम्, अवशेषाद्, अतो ाक्तव्यं—कस्य संयोगात्, कस्य वा विभागादेष उपजायते? तत्राह—

**"अपां संयोगाद् विभागाच्च स्तनयित्नोः ॥ ११ ॥**

उपजनिरिति शेषः। अपाम्=उपलक्षणमेतत्, अप्तेजसोः संयोगात्=मिथः ंयोगसंबन्धाद् विभागाच्च=विभक्तेश्च स्तनयित्नोः=विस्फूर्जथोरुपजनिर्भव-ीत्यर्थः।

तत्राकाशं समवायिकारणम्। तेजःसंयोगविभागौ चाकाशेनासमवायि-कारणम्। अद्भिश्च तौ निमित्तकारणमिति विवेकः ॥ ११ ॥

**अपां** कर्म परीक्ष्य तेजःप्रभृतिकर्मपरीक्षामतिदिशति—

**"पृथिवीकर्मणा तेजःकर्म वायुकर्म च व्याख्यातम् ॥ १२ ॥**

पृथिवीकर्मणा=नोदनादिजनितेन पृथिवीकर्मणा तेजःकर्म वायुकर्म च नोदनादिजनितं व्याख्यातं=परीक्षितं वेदितव्यमित्यर्थः ॥ १२ ॥

**ननु** तेजःप्रभृतीनामदृष्टकारितं कर्म किमस्ति? तत्राह—

**"अग्नेरूर्ध्वज्वलनं वायोस्तिर्य्यक्पवनमणूनां मनसश्चाद्यं कर्मादृष्टकारितम् ॥ १३ ॥**

अग्नेः=वह्नेरूर्ध्वज्वलनम्=ऊर्ध्वगमनात्मकं कर्म, वायोः=नभस्वतस्तिर्य्यक्पवनं=तिर्य्यक् चलनात्मकं कर्म, अणूनां=परमाणूनामाद्यं कर्म=महाभूतार-

म्भकं प्राथमिकं कर्म, मनसश्च=प्रकृतिलीनस्याभ्यन्तरेन्द्रियस्य मनसश्चाद्यं कर्म=सुखदुःखहेतुरभिव्यक्तिलक्षणं प्राथमिकं कर्मादृष्टकारितम्=अदृष्ट-जनितं विज्ञातव्यमित्यर्थः ।

**तत्र** तेजः कर्मणि वायुकर्मणि चादृष्टकारितत्वाददृष्टं वस्तुशक्तिः, न दृश्यते हि सा, किन्त्वनुमीयते । परमाणुकर्मणि मनःकर्मणि च जीवानां भोगहेतुः पुण्यापुण्यात्मकं कर्मादृष्टमिति विवेकः ॥ १३ ॥

**नन्वाद्यकर्मवन्मनसस्तत्तदिन्द्रियैः संबन्धविशेषप्रयोजकं तत्तत्प्रदेशे जा-यमान वृत्तिलक्षण कर्मापि व्याख्येयं, तत्राह—**

**"हस्तकर्मणा मनसः कर्म व्याख्यातम् ॥ १४ ॥**

मनसः=सर्गादावभिव्यक्तस्याभ्यन्तरेन्द्रियस्य मनसः कर्म=तत्तदिन्द्रियैः संबन्धविशेषप्रयोजकं वृत्तिलक्षणं कर्म हस्तकर्मणा=आत्मसंयोगप्रयत्नाभ्यां जनितेन हस्तकर्मणा व्याख्यातम्=आत्मसंयोगप्रयत्नाभ्यां जनितं व्याख्यातं वेदितव्यमित्यर्थः ।

**यथा** हि शरीरावयवं हस्तादिकं चिचालयिषुर्जीवात्मा पुरुषो **यदा** प्र-यतते, **तदा** तत्र यथाकामं कर्मोत्पद्यते । **तथैव** मनसो मध्यमपरिमाणत्वेन तत्तदिन्द्रियैः संबन्धसामान्ये सत्यपि तस्य ज्ञानहेतुसंबन्धविशेषोत्पादनार्थं यदाऽयं प्रयतते, तदैतत् तत्तदिन्द्रियप्रदेशे तेन तेनेन्द्रियेण विशेषतः सम्ब-न्धुं सम्बन्धविशेषप्रयोजिकां वृत्तिं लभते, वृत्ति लभमानश्च विशेषतः सम्ब-ध्यते । अतस्तस्यतत्तदिन्द्रियप्रदेशे योऽयं वृत्तिलाभः, तदेव सम्बन्धविशेषप्र-योजकत्वात् कर्म । तच्च हस्तादिकर्मवत् प्रयत्नजन्यमिति तद्व्याख्यानेन व्याख्यातमिति भावः ॥ १४ ॥

**नन्वीदृङ्मनःकर्मसद्भावे किं लिङ्गं ? तत्राह—**

**"आत्मेन्द्रियमनोऽर्थसन्निकर्षात्सुखदुःखे ॥ १५ ॥**

आत्मेन्द्रियमनोऽर्थसन्निकर्षात्=आत्मना घ्राणादिभिरिन्द्रियैश्च मनसः, गन्धादिभिरर्थैश्चेन्द्रियाणा तेषां, सन्निकर्षात्=सयोगसंयुक्तसमवायादिलक्ष-णात् सम्बन्धात् तत्तदर्थानुभवेन जायमाने सुखदुःखे=सुखञ्च दुःखञ्च, ते तादृङ्मनःकर्मसद्भावे लिङ्गमित्यर्थः ।

पुरुषस्तावदिष्टमर्थमनुभवन् सुखी, विपरीतञ्चार्थमनुभवन् दुःखी भवति, न च तस्य तत्तदर्थानुभवः खल्विन्द्रियार्थसन्निकर्षमात्रादुत्पत्तुमर्हति । सत्यपि तस्मिन्नन्यत्रमनसस्तदुत्पादाननुभावात् । किन्त्वात्मसंयुक्तस्य मनसो घ्राणादिभिरिन्द्रियैः, तेषाञ्च गन्धादिभिरर्थैः सन्निकर्षात् । न चैषोऽन्तरेण मनःकर्म कथञ्चिदुपपद्यते । द्रव्यसन्निकर्षस्य कर्मजन्यत्वनियमात् । न च मध्यमपरिमाणस्य मनसस्तत्तदिन्द्रियप्रदेशे विना वृत्तिलक्षणंकर्म कर्मान्तरमुपपद्यते । न वा विना तादृक्कर्म तत्तदर्थानुभवो युज्यते । न वा तं वर्जयित्वा सुखदुःखे संभवतः । तस्मात् ते एवान्यथाऽनुपपद्यमाने भवतस्तादृङ्मनःकर्मसद्भावे लिङ्गमिति भावः ॥ १५ ॥

**ननु** मनसि कर्मानारम्भः कदा भवति? योगदशायामिति चेत्, कोऽयं योगो नाम? तत्राह—

**"तदनारम्भ आत्मस्थे मनसि, शरीरस्य दुःखाभावः स योगः ॥ १६ ॥**

आत्मस्थे=वैराग्याभ्यासाभ्यामात्ममात्रनिष्ठे मनसि=चेतसि तदनारम्भः=कर्मानुगुणप्रयत्नाभावात्कर्मारम्भो न भवति, तत्र च यः शरीरस्य=शारीरस्य विशिष्टात्मनो दुःखाभावः=दुःखहेतूनां प्रमाणादिवृत्तीनामभावः स योगः=योगपदवाच्य इत्यर्थः ।

**यदा** हि चित्तं दृष्टानुश्रविकविषयवितृष्णं भवत्स्थित्यै प्रयतते, निरन्तरप्रयत्नेनान्यत्र स्थितिमलभमानमात्ममात्रे चावतिष्ठते, तदा तस्मिन् कर्मानुगुणप्रयत्नाभावाद् बहिरिन्द्रियसम्बन्धप्रयोजकानि कर्माणि नारभ्यन्ते, प्रत्युत बहिरिन्द्रियाणि च तदनुकारं भजन्ते । तत्रात्मन्यवस्थितस्य चेतसः कर्मारम्भाभावाद् योऽयं प्रमाणविपर्य्ययविकल्पनिद्रास्मृतीनामसद्भावः, स योग इति भावः ॥ १६ ॥

अदृष्टजन्यं कर्मान्तरं दर्शयति—

**"अपसर्पणमुपसर्पणमशितपीतसंयोगाः कार्य्यान्तरसंयोगाश्चेत्यदृष्टकारितानि ॥ १७ ॥**

अपसर्पणं=भोगेन प्रारब्धकर्मक्षये विनश्यतो देहादात्मसहितस्य मनसो बहिरुत्क्रमणं=मृतशरीरादात्मविभागस्य जनकं मनसः कर्मेति यावत्, उपसर्पणम्=आत्मसहितस्य मनसो देहान्तरे प्रवेशनम्=अभिनवदेहेनात्मनः सम्बन्धस्य जनकं मनसः कर्मेति यावत्, अशितपीतसंयोगाः=अशितानामन्नानां पीतानाञ्चोदकानां प्रक्रियाविशेषेण पक्वानां देहावयवोपचयहेतुभूतास्तत्तन्नाडीमुखेन तत्तद्देहावयवेषु संयोगाः, कार्य्यान्तरसंयोगाश्च=देहाद्देहान्तरमुपसर्पता मनसा सह बहिरिन्द्रियाणां प्राणानाञ्च कार्य्यान्तराणां देहान्तरेण तेन संयोगाश्च येन येन कर्मणा भवन्ति, तानि चेति=एतानि सर्वाण्यदृष्टकारितानि=पुण्यापुण्यं कर्मादृष्टं, तज्जन्यानीत्यर्थः ।

**यथा** बहिरिन्द्रियाणि प्राणाश्च कार्य्यं, **तथा** मनोऽपि कार्य्यमिति सूचनाय कार्य्यान्तरेत्युक्तिः । तत्र मनःप्रभृति समवायिकारणम् । अदृष्टवदात्मसंयोगोऽसमवायिकारणम् । अदृष्टं निमित्तकारणमिति विवेकः ॥ १७॥

**नन्वदृष्टाधीनमनःकर्मप्रयोज्यः** संसारो यथा निरूपितः, तथा मोक्षोऽपि निरूपणीयः ? तत्राह—

**"तदभावे संयोगाभावोऽप्रादुर्भावश्च मोक्षः ॥ १८ ॥**

तदभावे=नेतिनेतीति तत्त्वाभ्यासादुत्पन्नेन विवेकज्ञानेन सञ्चितानां, भोगेन च प्रारब्धानां, मिथ्याज्ञानापाये दोषनिवृत्त्या चागामिकानामदृष्टानामभावे यः संयोगाभावः=प्रयोजकाभावादात्मनो मनःप्रभृतिसम्बन्धाभावः=जन्माभाव इति यावत्, अप्रादुर्भावश्च=निमित्ताभावात्पुनर्दुःखानुत्पादश्च, स मोक्षः=मोक्षपदार्थ इत्यर्थः ।

**पुनः** पुनर्जन्मैव हि पुरुषाणां दुःखफलः संसारः, तच्च यावददृष्टं विद्यते, तावन्न निवर्तते । दोषाधीनञ्चादृष्टं, दोषाश्च मिथ्याज्ञाननिबन्धनाः । तस्मात् तत्त्वज्ञानेन मिथ्याज्ञानापाये दोषापायाददृष्टन्तावदपैति, तदपाये च जन्मापायाद् यः खलु जन्मनिमित्तानामाध्यात्मिकादित्रिविधदुःखानामत्यन्तापायः स मोक्ष इति भावः ।

**इदमत्र बोध्यम्**—यद्यपि वैदिकानां तत्त्वज्ञानेन दुःखात्यन्तनिवृत्त्या चिदात्मना स्वेन ब्रह्मानन्दोपभोगो मोक्ष इति राद्धान्तः । तथापि दुःखात्य-

न्तनिवृत्तौ सत्यां सोऽवश्यं भवति, दुःखात्यन्तनिवृत्तिरेव च सर्वथा यत्ननिष्पाद्या, न ब्रह्मानन्दोपभोगः, तस्मात्सैवापवर्ग इति सर्वशास्त्रप्रवाद इति ॥ १८॥

**ननु** पृथिव्यादिवत् तमसः कर्म कस्मान्न परीक्षितं, नीलं तमश्चलतीति तत्कर्मणोऽप्यनुभवात्, तत्राह—

**"द्रव्यगुणकर्मनिष्पत्तिवैधर्म्याद् भाभावस्तमः॥ १९ ॥**

द्रव्यगुणकर्मनिष्पत्तिवैधर्म्यात्=पृथिव्यादीनां द्रव्याणां, रूपादीनां गुणानाम्, उत्क्षेपणादीनां कर्मणाञ्च या निष्पत्तिः, ततो विलक्षणनिष्पत्तिधर्मकत्वात्=निष्पत्तिधर्मकेभ्यो द्रव्यगुणकर्मभ्यो विलक्षणत्वादिति यावत् भाभावः=तेजोऽभावस्तमः=तमःपदार्थ इत्यर्थः ।

**नित्यं** तम इत्येतत्तावदसम्भवं, जन्युपलब्धेः । जन्यमिति चेत्, तदा जन्यानां द्रव्यगुणकर्मणामन्यतमं स्यात्, न च गुणो वा कर्म वा संभवति, रूपवत्त्वेनोपलम्भात् । न च भूरुदकं तेजो वा तमो युज्यते, तन्निष्पत्तितो विलक्षणनिष्पत्तिकत्वात्—स्पर्शवद्द्रव्यतन्त्रा हि तन्निष्पत्तिः, न च तमसि स्पर्शोऽनुभूयते, न वा गन्धादयस्तदसाधारणाः गुणास्तत्रोपलभ्यन्ते । तदतिरिक्तं द्रव्यं चेत्, तदा नीलरूपवदवयवैरारब्धं वक्तव्यं, तन्न वक्तुं शक्यते, नीलरूपस्य गन्धनान्तरीयकत्वनियमेन गन्धस्यापि तत्रोपलब्धिप्रसङ्गात् । नीलरूपमात्रगुणकत्वे चालोकनिरपेक्षेण चक्षुषा न गृह्येत, रूपवतः कस्यापि तथात्वादृष्टेः । तस्माद् गुणकर्मवद् द्रव्यमपि तमो न युक्तम् । अपि चोद्भूतरूपवद्यावत्तेजःसंसर्गाभावस्तमः, न ततोऽतिरिक्तः कश्चिद् भावपदार्थः, येन तत्कर्म परीक्षितव्यं स्यादिति भावः ॥ १९ ॥

**ननु** द्रव्यगुणकर्मनिष्पत्तिवैधर्म्यान्मासैत्सीद् भावस्तमः, भाभावोऽपि कुतो निश्चेयं ? तत्राह—

**"तेजसो द्रव्यान्तरेणावरणाच्च ॥ २० ॥**

भाभावस्तम इत्यनुवर्तते । तमसि कर्मप्रतीती रूपप्रतीतिश्चौपाधिकीति चार्थः । द्रव्यान्तरेण=तेजसो भिन्नेनावरकेण द्रव्येण तेजसः=उद्भूतरूपवतस्तेजोमात्रस्यावरणात्=आच्छादनाद् नियमेन तमःप्रतीतेर्भाभावस्तमः प्रतिपत्तव्यमित्यर्थः ।

यदा हि द्रव्यान्तरेण तेजस्तावदाव्रियते, तदैव तमःप्रतीयते नान्यदा। चेद् द्रव्यान्तरं किञ्चिद् भवेत्, न जातु तथा प्रतीयेत। तस्यैवं प्रतीतेर्भवत्यनुमानं भाभावस्तमो न द्रव्यान्तरमिति भावः ।

**तत्रा**वरकद्रव्यगत्या तमसि गतिप्रतीतिः, आश्रयगतरूपतश्च रूपप्रतीतिर्न स्वत इति विवेकः ॥ २० ॥

**ननु** भवतु तमसोऽभावत्वात् तत्कर्मापरीक्षणं, दिगादिकर्म कस्मान्न परीक्ष्यते, तत्राह—

**"दिक्कालावाकाशञ्च क्रियावद्वैधर्म्यान्निष्क्रियाणि॥२१॥**

दिक्कालावाकाशञ्च=दिक्कालाकाशानि च क्रियावद्वैधर्म्यात्=यत् क्रियावत्, तन्मूर्तम्, इति नियमात् क्रियावतां साधर्म्यं मूर्तत्वं, वैधर्म्यममूर्त्तत्वं, तस्मान्निष्क्रियाणि=कर्मशून्यानि सन्तीत्यर्थः ।

**अमू**र्त्तत्वान्निष्क्रियौ दिक्कालौ, निष्क्रियञ्चाकाशम् । अतो न तत्कर्म परीक्ष्यते इति भावः ।

**तत्र** चकारादात्मसङ्ग्रह इति शङ्करमिश्रः। आत्मा च परमात्मा। जीवात्मनोऽणुत्वेऽपि कूटस्थनित्यतया क्रियापरिणामासंभवान्निष्क्रियत्वमिति विवेकः ॥ २१ ॥

**अतिदिशति—**

**"एतेन कर्माणि गुणाश्च व्याख्याताः ॥ २२ ॥**

निष्क्रियाणीत्यनुवर्तते। एतेन=क्रियावद्वैधर्म्येणैव हेतुना कर्माणि=उत्क्षेपणादीनि कर्माणि, गुणाश्च=रूपादयो गुणाश्च, व्याख्याताः=यथाक्रमं निष्क्रियाणि, निष्क्रियाश्च व्याख्याताः वेदितव्या इत्यर्थः ॥ २२ ॥

**ननु** गुणकर्मणोर्निष्क्रियत्वे तयोर्द्रव्येण सम्बन्धो न सिध्येत्, लोके सम्बन्धस्य कर्मैकजन्यत्वदर्शनात्, तत्राह—

**"निष्क्रियाणां समवायः, कर्मभ्यो निषिद्धः ॥ २३ ॥**

निष्क्रियाणां=गुणाना कर्मणाञ्च समवायः=द्रव्येण साकं समवायः सम्बन्धोऽभ्युपगम्यते, न संयोगः। तदुत्पादश्च नित्यत्वात् कर्मभ्यो निषिद्धः= अस्माभिः प्रतिषिद्ध इत्यर्थः ।

**संयोगे** कर्मजन्यत्वनियमो न समवाये, तस्य नित्यत्वाभ्युपगमात्। गुणानां कर्मणाञ्च द्रव्येण समवायः सम्बन्धो न संयोग इति भावः ॥२३॥

**ननु** निष्क्रियाश्चेद्गुणास्तदा कथं ते कर्मारभन्ते इति पुरस्तादुक्तं, नहि निष्क्रियः कश्चित्कर्मारब्धुं शक्नोति, तत्राह—

**"कारणन्त्वसमवायिनो गुणाः ॥ २४ ॥**

गुणाः=संयोगादयो गुणाः कारणन्त्वसमवायिनः=बहुवचनमेतत्, तु-शब्देन 'समवायिनः' इति व्यवच्छिनत्ति, कर्म प्रति पूर्वमसमवायिनः कारण-मुक्ताः, न समवायिन इत्यर्थः।

**कर्म**समवायिकारणं निष्क्रियं न सङ्गच्छते, न तदसमवायिकारणम्। गुणानाञ्च पूर्वं कर्मप्रत्यसमवायिकारणत्वमेवोक्तं, न समवायिकारणत्वम्। अतो न कश्चिद्दोष इति भावः ॥ २४ ॥

**ननु** गुणकर्मणोर्निष्क्रियत्वेऽपि दिक्कालौ निष्क्रियौ नोपपद्येते, तयोः "इह कर्मोत्पन्नम्, इदानीं कर्मोत्पन्नम्" इत्यादिना कर्मसमवायिकारणत्व-प्रतीतेः, तत्राह—

**"गुणैर्दिग्व्याख्याता ॥ २५ ॥**

गुणैः=अमूर्त्तत्वेन हेतुना निष्पन्नैः कर्मसमवायिकारणत्वाभाववद्भी रूपादिभिर्गुणैर्दिक्=पूर्वादिदिगपि व्याख्याता=कर्मसमवायिकारणत्वाभाव-वती व्याख्याता वेदितव्येत्यर्थः।

**यथा** गुणा न कर्मसमवायिकारणम्, अमूर्त्तत्वात्। तथा दिगपि न तत्समवायिकारणं सम्भवति, अमूर्त्तत्वाविशेषात्। कर्माधारत्वप्रतीतिस्तु "वने सिंहनादः" इत्यादिवदौपचारिकी, न मुख्या। तस्मान्निष्क्रिया दिगिति भावः ॥ २५ ॥

**"कारणेन कालः ॥ २६ ॥**

व्याख्यात इति विपरिणम्यानुवर्त्तते। कारणेन=भावप्रधानो निर्देशः, निमित्तकारणत्वेन कालः=कालपदार्थो व्याख्यातः=कर्मसमवायिकारण-त्वाभाववान् व्याख्यातो वेदितव्य इत्यर्थः।

यद् यस्य निमित्तकारणं, तत् तस्य समवायिकारणं न भवति, यथा तुरीवेमादिकं पटस्य । कर्मनिमित्तकारणञ्च कालः, जन्यमात्रनिमित्तत्वात् । अतो नासौ कर्मसमवायिकारणम् । कर्माधारत्वप्रतीतिस्तु तन्निमित्ततयाऽप्युपपद्यते । तस्मान्निष्क्रियः कालः इति भावः ॥ २६ ॥

**भूम्यादिपञ्चगं कर्म नोदनादृष्टकारितम् ।**
**तमः प्रासङ्गिकश्चान्यद्द्वितीयेऽस्मिन् परीक्षितम् ॥ १ ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृतायां वैशेषिकसूत्रवैदिकवृत्तौ पञ्चमाध्यायस्य द्वितीयमाह्निकम् ॥ २ ॥

समाप्तश्चायं कर्माध्यायः पञ्चमः ॥ ५ ॥



# अथ षष्ठोऽध्यायः।

## आद्यमाह्निकम्।

"अथातो धर्मं व्याख्यास्यामः" इति प्रतिज्ञाय प्रमाणजिज्ञासायां "तद्वचनादाम्नायस्य प्रामाण्यम्" इत्यभिहितम्। इदानीं कर्मप्रसङ्गादुपस्थितं व्याख्यास्यमानत्वेन प्रतिज्ञातं तमेव वेदविहितं धर्मं संक्षेपेण व्याख्यातुकामः षष्ठाध्यायमारभमाणः पूर्वन्तावद् धर्मे प्रमाणत्वेनाभिहितस्य भगवतो वेदस्य प्रामाण्याय तस्येश्वरबुद्धिपूर्वकत्वमनुमानेन साधयिष्यन्नाह—

**"बुद्धिपूर्वा वाक्कृतिर्वेदे ॥ १ ॥**

वेदे=ऋग्यजुःसामाथर्वनाम्नि भगवति वेदे या वाक्कृतिः=वाक्यरचना सा बुद्धिपूर्वा=स्वार्थविषयवक्तृयथार्थज्ञानपूर्विका, वाक्कृतित्वात्, अस्मदादिवाक्कृतिवदित्यर्थः।

अनेकविद्यास्थानोपबृंहितस्य प्रदीपवत्सर्वार्थावद्योतिनः सर्वज्ञकल्पस्य भगवतो वेदस्य वाक्यरचनायाः रचनाविशेषतया बुद्धिपूर्वकत्वावश्यंभावेनास्मदादिबुद्धिपूर्वकत्वासम्भवात्सर्वज्ञेश्वरबुद्धिपूर्वकत्वसिद्धौ प्रामाण्यं निर्बाधमिति भावः ॥ १ ॥

प्रमाणान्तरमाह—

**"ब्राह्मणे संज्ञाकर्म सिद्धिलिङ्गम् ॥ २ ॥**

ब्राह्मणे=ब्राह्मणप्रभृति निखिलप्राणिभेदे संज्ञाकर्म=समाहारद्वन्द्वादेकवद्भावः, सर्गारम्भे भगवतो वेदात्प्रवृत्तं संज्ञाकर्म सिद्धिलिङ्गं=तस्येश्वरोक्तत्वसिद्धौ प्रमाणमित्यर्थः।

नहि सर्गारम्भे भगवतो जगदीश्वरादन्यः कश्चिन्निखिलप्राणिनां संज्ञां च कर्म च विधातुमीष्टे। संज्ञाकर्म चादौ भगवतो वेदात्प्रवृत्तम्। अतस्तदेवान्यथानुपपन्नं सत्तस्येश्वरोक्तत्वे भवति लिङ्गमिति भावः।

यद्यप्येतत् **"संज्ञाकर्म त्वस्मद्विशिष्टानां लिङ्गम्"** (वै० अ० २ आ० १ सू० १९) इति पुरस्तादुपन्यस्तम्, तथापि प्रमाणवर्गसङ्कलनार्थमिह पुनस्तस्योपन्यास इत्यदोषः ॥ २ ॥

अन्यं प्रमाणमाह—

"बुद्धिपूर्वो ददातिः ॥ ३ ॥

"ददातिः=उच्चा दिवि दक्षिणावन्तो अस्थुः, ये अश्वदाः सह ते सूर्य्येण । हिरण्यदा अमृतत्वं भजन्ते, वासोदाः सोमप्रतिरन्तआयुः" (ऋ० अ० ८ अ० ६ व० ३ मं० २) इत्यादिनोपदिष्टो यो ददातिः, स बुद्धिपूर्वः=सर्वज्ञबुद्धिपूर्वक इत्यर्थः ।

ये दीर्घदर्शिनो महाभागाः सद्गृहस्थाः देशात्मोद्धारार्थं तत्प्रबन्धृभ्यः प्राप्तब्रह्मसम्पद्भ्यो ब्राह्मणेभ्यः श्रद्धाभक्तिभ्यां हिरण्यादिकं ददते, तेऽमृतत्वं भजन्ते, इत्येतत्तावन्नाल्पज्ञः कश्चिदुपदेष्टुमर्हति, तस्य भाविफलज्ञानासम्भवात्, उपदिशति च भगवान् वेदः, ततो भवत्यनुमानं नूनमेष सर्वज्ञबुद्धिपूर्वक इति भावः ॥ ३ ॥

अतिदिशति—

"तथा प्रतिग्रहः ॥ ४ ॥

प्रतिग्रहः=कायेन मनसा वाचा प्रतिक्षणं देशात्मोद्धारमिच्छद्भिर्गृहमेधिभिर्महाभागैः प्राप्तब्रह्मसम्पद्भ्यो ब्राह्मणेभ्यः श्रद्धाभक्तिभ्यां दत्तस्य हिरण्यादेर्यस्तैर्वेदोपदिष्टः सादरं स्वीकारः, सोऽपि तथा=सर्वज्ञबुद्धिपूर्वक इत्यर्थः ।

गृहमेधिभिर्महाभागैर्दत्तस्य हिरण्यादेः प्रतिग्रहीतारो लब्धब्रह्मसम्पदो ब्राह्मणाः खलु यथोचितप्रबन्धेन दायिनस्तान् द्रागित्येवामृतं सुखं भाजयन्ते । विलक्षणा ह्येषां प्रबन्धृणामाध्यात्मिकी शक्तिः । न तत्कार्य्यं किञ्चिद् जगति विद्यते, यज्जागरूकाः सन्तोऽमी भारतमानसराजहंसाः किलार्य्यकुलनन्दनाः न जातु सत्वरं निष्पादयेयुः । अमृतञ्चार्य्यतनयास्ते विद्याबलिनो न तान् सम्प्रापयेयुः । तस्माद् भो महाभागाः सद्गृहस्थाः ! सर्वदा देशात्मोद्धारार्थं यथा स्यात्तथा भवद्भिस्तत्प्रबन्धृभ्यो लब्धब्रह्मसम्पद्भ्यो ब्राह्मणेभ्यो हिरण्यादिकं प्राणप्रियं वस्तु सदपि यावज्जीवं दातव्यम् । प्रतिग्रहीतृभिश्चतैः सादरं तत्प्रतिगृह्य यथेष्टोपयोगेन देशात्मानौ समुद्धृत्यामृतं सुखं भाजयितव्यम्—इत्येतत्तावन्नाल्पज्ञ कश्चिदुपदेष्टु शक्नोति । तस्य भाविफलवेदने

सामर्थ्याभावात्। उपदिशति च भगवान् वेदः। ततो भवत्यनुमानं नूनमेष प्रतिग्रहो ददातिवत् सर्वज्ञबुद्धिपूर्वक इति भावः।

तत्रोत्सर्गपूर्वकः परस्वत्वेन सम्बन्धो ददातिः, उत्सृष्टस्य सादरं ीकारः प्रतिगृह्णातिः, इति विवेकः॥ ४॥

भगवद्बुद्धिपूर्वकत्वात्प्रमाणं वेद इति साधितम्। सम्प्रति तत्प्रमाणकं र्मं=निखिलं विहितं कर्म संक्षेपतो व्याख्यास्यन् पूर्वन्तस्य सामानाधिकर- ेन फलजनकत्वन्तावत्साधयते—

**"आत्मान्तरगुणानामात्मान्तरेऽकारणत्वात्॥ ५॥**

वेदविहितमखिलं कर्मानुष्ठित सत् स्वसामानाधिकरण्येनैव फलं जन- ते, न वैयधिकरण्येनेति प्रतिज्ञाशेषः। हेतोः प्रतिज्ञासाकांक्षत्वात्। तत्र तुः— आत्मान्तरगुणानाम्=अन्येनात्मनाऽनुष्ठितानां कर्मणामात्मान्तरे= न्यस्मिन्नात्मन्यकारणत्वात्=फलाजनकत्वादित्यर्थः।

यो हि पुण्यं वा पापं वा कर्म कुरुते, स एव सुखं वा दुःखं वा त- फलमुपभङ्क्ते, न तदपरः, तद्यथोक्तं पूर्वमीमांसायां **"शास्त्रफलं प्रयो- क्तरि"** (मी. अ. ३ पा. ७ सू. १५) इति। चेदपरोऽप्यन्यानुष्ठितस्य र्मणः फलमुपभुञ्जीत, तदा कृतहान्यकृताभ्यागमः प्रसज्येत। नचैष यान्। अतो लौकिककर्मवदग्निहोत्रादिकं वैदिकं कर्माप्यनुष्ठितं सत्स्व- ामानाधिकरण्येनैव फलमुपजनयति, न वैयधिकरण्येनेति भावः॥ ५॥

ननु यदेतद् वैदिकं कर्म तत्किमनुष्ठीयमानं सत्सर्वत्रफलजनकं विद्यते? त्राह—

**"तद् दुष्टभोजने न विद्यते॥ ६॥**

तत्=वैदिकं कर्म दुष्टभोजने=दुष्टं=शास्त्रप्रतिषिद्धं भोजनं यस्य, त- स्मिन्नार्य्ये न विद्यते=फलजनकं न भवतीत्यर्थः।

यस्तावदार्य्यो दुष्टं भोजनं कुरुते, न तदनुष्ठितं किमपि वैदिकं कर्म लं प्रसूते, वैगुण्यादिति भावः॥ ६॥

ननु किन्तद् दुष्टं भोजनं? तत्राह—

**"दुष्टं हिंसायाम्॥ ७॥**

हिंसायां=सर्वशास्त्रप्रतिषिद्धायां प्राणिहिसायां सत्यां यद् भोजनं तद् दुष्टमित्यर्थः ।

**"पशून् पाहि"** (यजुः.–अ. १–मं. १) **"गां माहिंसीः"** (यजुः. अ. १३–मं. ४३) **"अविं माहिंसीः"** (यजुः अ. १३–मं. ४४) **"इमं माहिंसीर्द्विपादं पशुम्"** (यजुः–अ. १३–म. ४७) **"माहिंसीरेकशफं पशुम्"** (यजुः–अ. १३–मं. ४८) **"नाऽकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित् । न च प्राणिवधः स्वर्ग्यस्तस्मान्मांसं विवर्जयेत् ॥ समुत्पत्तिश्च मांसस्य वधबन्धौ च देहिनाम् । प्रसमीक्ष्य निवर्तेत सर्वमांसस्य भक्षणात्"** (मनुः अ. ५ श्लो. ४८।४९) इत्यादिकं शास्त्रविधिमुल्लङ्घ्य यः पुरुषः प्राणिनो हिनस्ति, तन्मांसाँश्चात्मनः कृते पचति, तस्य शास्त्रप्रतिषिद्धत्वाद् भोजनं दुष्टमिति भावः ॥ ७ ॥

**ननु** चेदेको हिनस्ति तदपरोऽभ्यवहरति, तदा किमभ्यवहरतोऽपरस्यापि कश्चिद्दोषो भवति? तत्राह—

**"तस्य समभिव्याहारतो दोषः ॥ ८ ॥**

तस्य=यस्य पुरुषस्य दुष्टं भोजनं, तस्य समभिव्याहारतः=पञ्चम्यास्तसिः, विद्यासम्बन्धो योनिसम्बन्धश्च समभिव्याहारः, तस्माद्दोषः=विहितकर्मफलप्रतिबन्धको दोषो भवतीत्यर्थः ।

**यथा** हि दुष्टभोजनस्याखिल कर्म विफलं जायते, **तथा** तत्संसर्गिणोऽपि वेदितव्यम् । वेदाज्ञोल्लङ्घनस्योभयत्र समानत्वादिति भावः ॥ ८ ॥

**ननु** चेदयं दुष्टभोजनः कदाचिद् दुष्ट भोजनं परिजह्यात्, किन्तदाऽपि तत्समभिव्याहारतो दोषो भवति? तत्राह—

**"तददुष्टे न विद्यते ॥ ९ ॥**

पूर्वसूत्रमनुवर्तते । तददुष्टे=तस्मिन्नदुष्टभोजने सति तत्समभिव्याहारतो दोषो न विद्यते=न भवतीत्यर्थ. ॥ ९ ॥

**ननु** दुष्टं भोजनं त्यजता पुनः किं विधेयं, येनास्यानुष्ठितं निखिलं कर्म फलवद्भवेत्? तत्राह—

**"पुनर्विशिष्टे प्रवृत्तिः ॥ १० ॥**

पुनः=दुष्टभोजनपरित्यागानन्तरं विशिष्टे=शास्त्रसंमते सत्त्वगुणविशिष्टे केवलसात्त्विके भोजने प्रवृत्तिः=आत्मप्रवृत्तिर्विधातव्येत्यर्थः ॥ १० ॥

**ननु** विशिष्टप्रवृत्तावसमर्थेन क्व प्रवृत्तिर्विधातव्या? तत्राह—

**"समे हीने वा प्रवृत्तिः ॥ ११ ॥**

समे=विशिष्टप्रवृत्तौ सामर्थ्याभावे सत्त्वरजस्समे=न केवलसात्त्विके न केवलराजसे किन्तु समानभावेन तदुभयमिश्रिते, हीने वा=सत्त्वहीने केवलराजसे वा, भोजने प्रवृतिर्विधातव्या, न हीनतरे तामसे दुष्ट इत्यर्थः ॥ ११ ॥

अतिदिशति—

**"एतेन हीनसमविशिष्टधार्मिकेभ्यः परस्वादानं व्याख्यातम् ॥ १२ ॥**

एतेन=यथासामर्थ्यं हीनसमविशिष्टभोजनेषु प्रवृत्तिव्याख्यानेन हीनसमविशिष्टधार्मिकेभ्यः=मन्दमध्यमोत्तमेभ्यो नित्यं धर्मानुशीलेभ्यो गृहमेधिभ्यः परस्वादानं=परेषां=तेषां=स्वस्य=धनस्यादानं=सादरं परिग्रहणं व्याख्यातम्=उपपादितं वेदितव्यमित्यर्थः ।

**यथा**शक्ति नियमेन विशिष्टधार्मिकेभ्यो गृहमेधिभ्यो देशात्मोपकारार्थं हिरण्यादिकं प्रतिग्रहीतव्यम् । तदभावे समधार्मिकेभ्यो हीनधार्मिकेभ्यो वा । न जातु हीनतरधार्मिकेभ्यो, हानिकरत्वादिति भावः ।

**तत्र** यस्तावत्सर्वाङ्गपूर्णं वेदविहितं निखिलं कर्म सततमनुतिष्ठति, स विशिष्टः । तत· किञ्चिदूनं, स समः । ततोऽपि न्यूनं, स हीन इति विवेकः ॥ १२ ॥

अतिदेशान्तरमाह—

**"तथा विरुद्धानां त्यागः ॥ १३ ॥**

व्याख्यात इति विपरिणम्यानुवर्तते । तथा=यथा हीनादिभ्यः परस्वादानं व्याख्यातं, तथा विरुद्धानां=श्रुतिस्मृतिविरुद्धानां कर्मणां त्यागः=परित्यागोऽपि व्याख्यातो द्रष्टव्य इत्यर्थः ।

श्रुतिस्मृतिविरुद्धं सर्वं कर्म सर्वथा परित्यक्तव्यं **"यान्यनवद्यानि**

**कर्माणि, तानि सेवितव्यानि नो इतराणि"** (तै. शि. अ.–व. १ अनु. ११) इत्याद्यनुशासनादिति भावः ॥ १३ ॥

**ननु** चेद् वैदिकधर्ममर्य्यादानभिज्ञो लुब्धकः कश्चिद् धर्मदस्युरार्य्यानस्मान् बलेन हस्तीकर्तुमागच्छेत्, तदा हिंसाकर्मणः श्रुतिस्मृतिभ्यां प्रतिषिद्धत्वात्तदनुष्ठानासमर्थैरहिंसाधर्मप्रधानैरस्माभिः स्वधर्माभिरक्षार्थं किं विधेय? तत्राह—

**"हीने परे त्यागः ॥ १४ ॥**

पूर्वतोऽनुवृत्तिसम्भवेऽप्यर्थभेदज्ञापनाय त्यागपदं पुनरुपात्तम् । परे= हस्तीकर्तुमागते धर्मदस्यौ हीने=बलतो हीने ज्ञाते सति त्यागः=युद्धेन तस्य विसर्गः=वधो विधातव्य इत्यर्थः ।

**यस्तावद्** धीमान् स्वधर्माभिरक्षां प्राणतः प्रियां मन्यते। तदर्थञ्च परेणापराङ्मुखो युध्यते, न स पुण्यजन्मा वीरपुङ्गवो युद्धहिंसाकर्मणा मात्रयाऽपि लिप्यते। धर्मरक्षाङ्गं हि तत्कर्म, न तदन्तरेण धर्मो रक्षितुं शक्यते। नवाऽकृतरक्षासविधाना. क्वचिद् यथाकामं स्वधर्मं खल्वनुष्ठातुं पारयन्ते। तदनुष्ठानाभावे वा निरातङ्कं स्वर्गे सुखमश्नुवते। तस्मात्स्वधर्माभिरक्षायै प्रारब्धे धर्म्यसङ्ग्रामे निःशङ्कं परः पापीयान् पराजेयः, तीक्ष्णैर्वा क्षुरधारैः सबलं यमपुरीं नेयः, नास्त्यत्र किञ्चित्पापं, न वा किञ्चित् प्रायश्चित्तमिति भावः ॥ १४ ॥

**ननु** चेत्परः समो ज्ञायेत, तदा किं विधातव्यं? तत्राह—

**"सम आत्मत्यागः परत्यागो वा ॥ १५ ॥**

पर इत्यनुवर्तते। परे तस्मिन् समे=स्वसमानबले ज्ञाते सत्यात्मत्यागः= पुण्येन योधनकर्मणा स्वस्य विसर्गः, परत्यागो वा=परस्य विसर्गो वा विधातव्य इत्यर्थः ।

**बहुश्रेयसी** खलु वैदिकधर्मरक्षा, लोकपरलोकयोरभ्युदयनिश्रेयसोपायत्वात्। अल्पञ्च तदपेक्षया क्षणभङ्गुरं मानुषजीवनम् । तेन धन्यास्ते देहिनो निर्मलकीर्तयो ये वीरकर्माणः सन्तोऽल्पमिदं जीवनं तुच्छीकृत्य प्रसन्नवदनाः श्रेयस्यै धर्मरक्षायै पादोदरनिर्ल्वयनीवत्सुखेन तद् विसृजन्ति। यावज्जीवञ्च न जातु युद्धाद्विमुखी भवन्ति। प्राणान्तं युध्यमानाश्च

स्वधर्मं पालयन्ति । तस्माद् धर्म्ये युद्धं कर्म, अतः श्रेयाँस्तत्रात्मत्यागः, ततोऽपि वा श्रेयान् परत्याग इति भावः ॥ १५ ॥

ननु चेत्परो विशिष्टो ज्ञायेत, तदा किं कर्तव्यं ? तत्राह—

**"विशिष्ट आत्मत्यागः ॥ १६ ॥**

पर इत्यनुवर्तते । परे तस्मिन् विशिष्टे=बलविशेषयुक्ते ज्ञाते सत्यात्मत्यागः=अपराङ्मुख्येन युद्धे कर्मण्यात्मनो विसर्गः कर्तव्य इत्यर्थः ।

यथाहि धर्म्ये युद्धे परत्यागस्तावच्छ्रेयान्, तथात्मत्यागोऽपि मन्तव्यः। नायं ततो लेशेनापि किञ्चिन्न्यूनो वर्तते, अपिच सहस्रशो विशिष्यते । परं हि विसर्जयन् धर्मं रक्षति, रक्षिताच्च तस्मादभ्युदयं निःश्रेयसञ्च लभते । प्राणाँस्त्यजँश्चाद्धा योगिभिरपि दुर्लभं श्रेयःपदमश्नुते । यत्र न किञ्चिद् भयं विद्यते, न वा जरया कश्चिद् बिभेति । प्रत्युत शान्तसङ्कल्पः सुमना भूत्वा चिरमवतिष्ठमानो रामाभिच्छन्दतो रमते । तद्यथाऽऽम्नातं भगवति वेदे,

**"ये युध्यन्ते प्रधनेषु शूरासो ये तनूत्यजः ।**
**ये वा सहस्रदक्षिणास्ताँश्चिदेवापि गच्छतात्"**

(ऋ. अ. ८ अ. ८ व. १२ मं. ३) इति ।

भगवता मनुनाऽप्युक्तम्,

**"आहवेषु मिथोऽन्योऽन्यं जिघांसन्तो महीक्षितः ।**
**युध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः"**

(अ. ७ श्लोक ८९) इति ।

अतएव च नेदं कपूयाचरणम्, अपि च धार्मिकैरभ्युपेतत्वाद् रमणीयाचरणम् । न च रमणीयाचरणा अपि क्वचित्कपूयां योनिं प्रतियन्ति, तस्माद्विशिष्टे परे युध्यमाने निःशङ्कमपराङ्मुख्येन युद्धेनात्मनो विसर्गः कर्तव्य इति भावः ॥ १६ ॥

**मानं वेदवचः, कर्म कर्तय्येव फलप्रदम्,**
**अदुष्टभोजने सम्यगाह्निकेऽस्मिन् परीक्षितम् ॥ १ ॥**

**इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृतायां वैशेषिकसूत्रवैदिकवृत्तौ षष्ठाध्यायस्याद्यमाह्निकम् ।**

# अथ षष्ठोऽध्यायः ।

## द्वितीयमाह्निकम् ।

सामान्यतो वेदविहितं कर्म परीक्षित, सम्प्रति विशेषतः परीक्षयिष्यन्नाह—

**"दृष्टादृष्टप्रयोजनानां दृष्टाभावे प्रयोजनमभ्युदयाय ॥१**

दृष्टादृष्टप्रयोजनानाम्=ऐहिकं दृष्टम्, आमुष्मिकमदृष्टं, दृष्टञ्चादृष्टञ्चोभयविधं प्रयोजनं=फलं येषां वैदिककर्मणां, तानि तथा, तेषां दृष्टाभावे=दृष्टप्रयोजनप्राप्त्यभावे प्रयोजनं=भावेल्युट्,=प्रयोगः=अनुष्ठानमभ्युदयाय=दृष्टाभावस्योक्तत्वादामुष्मिकोऽभीष्टकार्याणामुदयोऽत्राभ्युदयः, तदर्थं वेदितव्यमित्यर्थ. ।

**वैदिकानि** कर्माणि यथाशास्त्रमनुष्ठितानि सन्ति दृष्टमदृष्टञ्च प्रयोजन साधयन्ति । तेषां यस्य कर्मणो यथाशास्त्रमनुष्ठानाद् दृष्टं प्रयोजनं न लभ्येत, तस्य तदनुष्ठानमदृष्टफलाय निश्चेतव्यमिति भाव ॥ १॥

**ननु** कानि तानि वैदिकानि कर्माणि, यानि यथाशास्त्रमनुष्ठितानि सन्ति दृष्टादृष्टप्रयोजनाय प्रभवन्ति? तत्राह—

**"अभिषेचनोपवासब्रह्मचर्य्यगुरुकुलवासवानप्रस्थयज्ञदानप्रोक्षणदिङ्नक्षत्रमन्त्रकालनियमाश्चादृष्टाय ॥ २ ॥**

अभ्युदयाय इत्यनुवर्तते । दृष्टाय इति भिन्नक्रमेण चकारेण समुच्चिनोति । शुचिद्रव्याभ्यवहरणञ्चाभिषेचनग्रहणेन गृह्यते । ब्रह्मचर्य्येण चाहिंसादयो यमाः उपलक्ष्यन्ते । शुद्धाभिरद्भिः स्नानम्=**अभिषेचनम्**, पापादुपरम्य चेतसो विहिते कर्मणि वास=**उपवासः** । धर्म्ये वोपस्थिते निमित्ते यथाशक्त्यन्नजलयोरसम्बन्धः=**उपवासः** । उपस्थेन्द्रियसंयमः=**ब्रह्मचर्यं**, साङ्गोपाङ्गश्रुत्यधिगमाय गुरुकुले वासः=**गुरुकुलवासः**, वयःपरिणामे वनंप्रस्थितस्य श्रुतिस्मृतिविहितं कर्म=**वानप्रस्थम्**, अग्निहोत्राद्यश्वमेधान्तं कर्म=**यज्ञः**, यथाशक्ति देशात्मोपकारार्थं हिरण्यवस्त्रभोजनादिषु स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पादन=**दानं**, यज्ञादिकर्मणि हविराद्यर्थं व्रीह्यादिद्रव्याणां यथाविधि पयसा संस्करणं=

**प्रोक्षणं**, प्राच्यादयः=**दिशः**, गर्भाधानादिकर्मण्युपयुक्तं रोहिण्यादिकं=**नक्षत्रम्**, **"आपोहिष्ठाः"** (ऋ. अ. ७ अ. ६ व. ६ सू. ९) **"ऋतञ्चसत्यञ्च"** (ऋ. अ. ८ अ. ८ व. ४८ सू. १९०) **"द्रुपदादिव"** (यजुः—अ. २० मं. २०) इत्यादिकं च प्रत्यहं जप्यं सूक्तत्रयं=**मन्त्रः**,कर्माङ्गावबद्धः प्रातरपराह्णदर्शपूर्णमासवसन्तचातुर्मास्यादिः=**कालः**, बाह्यशौचस्याभिषेचनग्रहणेन ग्रहणादाभ्यन्तरशौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि=**नियमाः**, तदेतच्चातुराश्रम्यं कर्मानुष्ठितं सद् दृष्टादृष्टाभ्युदयाय कल्पते इत्यर्थः।

**तत्रा**भिषेचनादितो जीवात्मनि धर्म उत्पद्यते, तेन चाभ्युदयः। धर्मे च जीवात्मा समवायिकारणं, मनःसंयोगोऽसमवायिकारणं, विद्याश्रद्धादिकञ्च निमित्तकारणमिति विवेकः॥ २॥

**ननु** यदेतच्चातुराश्रम्यं कर्माभिहितं, तत्किमितरनिरपेक्षं स्वफलं जनयति, सापेक्षं वा? तत्राह—

**"चातुराश्रम्यमुपधाः अनुपधाश्च॥ ३॥**

चातुराश्रम्यं=यदेतच्चतुर्णामाश्रमाणां साधारणमसाधारणञ्चाभिषेचनादिकं कर्माभिहितं, तदुपधा अनुपधाश्च=कर्मणि द्वितीयेयं, वक्ष्यमाणलक्षणाः उपधाः अनुपधाश्च सहायीकृत्य स्वफलमुपजनयतीत्यर्थः॥ ३॥

**ननु** केयमुपधा का चानुपधा? तत्राह—

**"भावदोष उपधाऽदोषोऽनुपधा॥ ४॥**

भावदोषः=भावस्य=जीवात्मनो यो दोषः=अविद्याऽश्रद्धाप्रभृतिदोषः, स उपधा=उपधाशब्देन परिभाष्यते, यश्चादोषः=दोषविपरीतो विद्या-श्रद्धाप्रभृतिगुणः, सोऽनुपधा=अनुपधाशब्देन कीर्त्यते इत्यर्थः।

**इतर**सापेक्षं सदभिषेचनादिकं वैदिकं कर्म स्वफलं प्रसूते, न निरपेक्षम्। तत्र चानुपधासापेक्षं दृष्टादृष्टाभ्युदयं **"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेववीर्य्यवत्तरं भवति"** (छा. प्र. ३ खं. १-१०) इति श्रुतेः, उपधासापेक्षन्तु तद्विपरीतम्। अतो दृष्टादृष्टाभ्यु-

दयकामैर्वैदिकैः सर्वदाऽनुपधयैव विहितं कर्मानुष्ठेयमिति भावः ॥ ४ ॥

**ननु** किं तच्छुचि द्रव्य, यस्याभ्यवहरणं दृष्टादृष्टाभ्युदयमुत्पादयतीत्युच्यते? तत्राह—

**"यदिष्टरूपरसगन्धस्पर्शं प्रोक्षितमभ्युक्षितं च, तच्छुचि ॥ ५ ॥**

प्रोक्षितं=यथाविधि शुद्धेन पयसा संस्कृतम्, अभ्युक्षितं च=स्वेच्छया वा तादृशपयसा संस्कृतं चेष्टरूपरसगन्धस्पर्शम्=इष्टाः=श्रुतिस्मृतिशिष्टानामिष्टाः स्वस्य च प्रियाः रूपरसगन्धस्पर्शाः यस्य न्यायार्जितद्रव्यस्य, तत्तथा यद्=यद् द्रव्यं, तत्=तद् द्रव्यं शुचि=शुद्धम्=अभ्यवहारादिक्रियायै स्वीकर्तुं योग्यमित्यर्थः ।

**प्रो**क्षितमभ्युक्षितं च यन्न्यायार्जितं प्रशस्तरूपरसगन्धस्पर्शवद् द्रव्य, तच्छुचीति भावः ॥ ५ ॥

**नन्व**शुचि किं विज्ञेय? तत्राह—

**"अशुचीति शुचिप्रतिषेधः ॥ ६ ॥**

शुचिप्रतिषेधः=यच्छुचि न भवति, तदशुचीति वेदितव्यमित्यर्थः ।

**यद्धि** निषिद्धेन पयसा प्रोक्षितं, तादृशा वाऽभ्युक्षितम्, अन्यायेन वाऽर्जितम्, अप्रशस्तरूपरसगन्धस्पर्शवद् वा द्रव्यं, तदशुचीति भावः॥ ६ ॥

अशुच्यन्तरमाह—

**"अर्थान्तरं च ॥ ७ ॥**

अशुचीत्यनुवर्तते । योऽर्थो यस्य वर्णाश्रमिणो विहितस्तदन्यस्तस्याशुचिरित्यर्थः ।

**द्रव्यं** गुणः कर्मेति त्रयमर्थशब्देन परिभाष्यते, तत्र यद् द्रव्य यस्य भोजनादौ विहित, ततोऽन्यत्तस्याशुचि । तथा यो गुणो यस्य विहितो मार्दवादिस्तद्विपर्य्ययस्तस्याशुचि । एव यत्कर्म यस्य विहितं, ततोऽन्यत्तस्याशुचीति भाव. ॥ ७ ॥

**ननु** यः कश्चिदेतच्छुचि भोजनं कुरुते, किं स सर्वोऽप्यभ्युदयं तावदुपभुङ्क्ते? तत्राह—

**"अयतस्य शुचिभोजनादभ्युदयो न विद्यते, नियमाभावात् ॥ ८ ॥**

अयतस्य=अहिंसादियमरहितस्य पुंसः शुचिभोजनात्=शुचिभोजनकरणादभ्युदयः=दृष्टादृष्टाभ्युदयो न विद्यते=न भवति। कुतः? नियमाभावात्=तस्य यमाभावे शौचादिनियमस्याप्यभावादित्यर्थः।

यस्य यमो नास्ति, तस्य नियमोऽपि न संभवति। यतो नियतश्च शुचि भुञ्जानः फलमुपभुङ्क्ते नेतर इति भावः ॥ ८ ॥

**नन्वेवं** तर्हि हिंसाकर्मणि युद्धे प्रवृत्तानां शुचिभोजनादभ्युदयो न विद्येत, तत्राह—

**"विद्यते वाऽर्थान्तरत्वाद् यमस्य ॥ ९ ॥**

शुचिभोजनादभ्युदय इत्यनुवर्तते। वा शब्दः पक्षान्तरमाह। विद्यते वा=हिंसाकर्मणि युद्धे प्रवृत्तानां तु शुचिभोजनादभ्युदयो विद्यते। कुतः? अर्थान्तरत्वाद् यमस्य=नियमस्येत्यपि द्रष्टव्यं, यमस्य नियमस्य चार्थान्तरविषयत्वात्=युद्धकालातिरिक्तकालविषयत्वादित्यर्थः।

देशात्मोद्धारार्थं यथान्यायं युध्यमानानां तु भुजिक्रियायां नास्ति किंचिद्बन्धनमिति भावः ॥ ९ ॥

**ननु** युद्धादन्यत्रापि शुचिभोजनादेवाभ्युदयः सेत्स्यति, कृतं तत्सहकारिभ्यां यमनियमाभ्यां, तत्राह—

**"असति चाभावात् ॥ १० ॥**

असति च=यमनियमाभावे चाभावात्=शुचिभोजनासम्भवादित्यर्थः।

यस्य हि यमनियमौ नस्तः, न तस्य भोजनं शुचि सम्पत्तुमर्हति। तदधीनत्वात्तत्सम्पत्तेः। अभ्युदयस्तु ततो दवीयान्। अतस्तत्कामैः सर्वदा यमनियमाभ्यामेव शुचि भोक्तव्यं नान्यथेति भावः ॥ १० ॥

**विशेषतः** कर्म परीक्षितम् । इदानीं तन्निमित्तं दोष परीक्षमाणस्तदुत्पादप्रकारमाह—

**"सुखाद् रागः ॥ ११ ॥**

दुःखाद् द्वेष इत्यपि द्रष्टव्यम् । सुखात्=विषयेण विषयिणं लक्षयति, सुखानुभवात्तज्जातीयसुखतत्साधनगोचरो रागः, दुःखानुभवाच्च तज्जातीयदुःखतत्साधनगोचरोद्वेष उत्पद्यते इत्यर्थः ।

**यस्य** यस्य साधनस्योपादानात्सुख दुःखं चानुभूतं, तज्जातीयं सुखं पुनरनुबभूषुर्दुःखं च परिजिहीर्षुस्तज्जातीयेषु सुखसाधनेष्वनुरज्यति, दुःखसाधनानि च तज्जातीयानि परिद्वेष्टीति ततस्तदुत्पाद इति भावः ॥ ११ ॥

**"तन्मयत्वाच्च ॥ १२ ॥**

राग इत्यनुवर्तते । स च द्वेषस्याप्युपलक्षणम् । सुखदुःखसाधनाभ्यासजनितो दृढतरसंस्कारविशेषः तन्मयत्वं, तस्माच्च सुखदुःखतत्साधनेपु रागद्वेषौ भवत इत्यर्थः ।

यद्वशाद्धयेकदा कामिनीसुखमुपभुञ्जानः कामुकः कामिनीमलभमानः सर्वत्र कामिनीम्, कदाचित्पादोदरदष्टश्च सर्वत्र पादोदरं पश्यति, तमेव संस्कारभेदं तन्मयत्वेनाचक्षते । ततश्चानुकूलेषु रागः प्रतिकूलेपु च द्वेपः संजायत इति भावः ॥ १२ ॥

**"अदृष्टाच्च ॥ १३ ॥**

रागद्वेपलाभः पूर्ववत् । पूर्वजन्मार्जितादृष्टाच्च रागद्वेपौ भवत इत्यर्थः ।

**येन** पुरुषेणैतज्जन्मनि कामिनीसुखं पादोदरदंशजं दुःखं च नानुभूतं, तस्य यौवनोद्भेदे योऽयं कामिनीरागः पादोदरे च द्वेपः, सोऽदृष्टनिमित्त इति भावः ॥ १३ ॥

**"जातिविशेषाच्च ॥ १४ ॥**

रागद्वेपलाभः पूर्ववत् । जातिर्जन्म, तद्विशेपाच्च रागद्वेपौ भवत इत्यर्थः ।

**योऽयं** मनुष्यजातीयानामन्नादौ, करभजातीयानां च कण्टकादौ, रागः, नकुलजातीयानां भुजङ्गमे, महिपजातीयानां च तुरङ्गमे, द्वेपः, स जातिविशेपनिमित्त इति भावः ॥ १४ ॥

**ननु** भवतु सुखादितो रागद्वेषोत्पादः, तन्निष्ठकर्मनिमित्ततायां किमायातं? तत्राह—

**"इच्छाद्वेषपूर्विका धर्माधर्मप्रवृत्तिः ॥ १५ ॥**

धर्माधर्मप्रवृत्तिः=यावती पुंसः सुखदुःखहेतुपुण्यापुण्यजनिका वाङ्मनःकायव्यापृतिः, सा सर्वा इच्छाद्वेषपूर्विका=रागद्वेषनिमित्तिका भवतीत्यर्थः ।

**मिथ्याज्ञानप्रयुक्तस्तावत्पुरुषोऽनुकूलेषु रागं प्रतिकूलेषु च द्वेषं कुरुते । ततश्चायमनुकूलानभीप्सन् प्रतिकूलाँश्च जिहासन् वाचा सत्यस्वाध्यायानृतकामसूत्रादौ मनसा दयाऽस्पृहापरद्रोहपरद्रव्याभीप्सादौ कायेनाभिषेचनदानहिंसास्तेयादौ च प्रवर्तते । सेयमस्य रागद्वेषपूर्विका धर्माधर्मप्रवृत्तिरिति भावः ।

**तत्राभिषेचनादौ** विहिते कर्मणि रागनिबन्धना प्रवृत्तिः सुखहेतुं धर्मं प्रसूते । हिंसादौ च निषिद्धे कर्मणि द्वेषनिबन्धना प्रवृत्तिर्दुःखहेतुमधर्ममिति विवेकः ॥ १५ ॥

**ननु** धर्माधर्मप्रवृत्तितोऽस्य किं भवति? तत्राह—

**"तत् संयोगो विभागः ॥ १६ ॥**

तत्=अव्ययम्, ततोऽस्य संयोगः=अपूर्वाभिः शरीरेन्द्रियवेदनाभिः सम्बन्धः पुनश्चाभिर्विभागः=प्रारब्धकर्मावसाने सम्बन्धाभावो भवतीत्यर्थ ।

धर्माधर्मप्रवृत्तितो नानाविधोच्चावचजीवयोनिषु पुनः पुनर्जायते म्रियते चेति भाव. ॥ १६ ॥

**ननु** दुःखमूलादस्माज्जन्ममरणप्रबन्धलक्षणात्प्रेत्यभावादस्य मोक्षः कदा भवति? तत्राह—

**"आत्मकर्मसु मोक्षो व्याख्यातः ॥ १७ ॥**

आत्मकर्मसु=परापरात्मज्ञानसाधनकर्मसु यमनियमादिषु सत्सु मोक्षः=पुरुषस्यापवर्गो व्याख्यातः=वेदोपनिषद्भ्या व्याख्यात इत्यर्थ· ।

**यदा**ऽयं मर्त्यो निष्कामः सन् तत्त्वज्ञानसाधनं वेदोक्तं कर्म सम्यगनुतिष्ठति, यमनियमादिकं च यत्नतः सम्पादयति, तदाऽस्य मोक्षो भवति नान्यदेति भाव. ।

अत्र वेदोपनिषदुक्तमेवार्याणां नैश्रेयस कर्म नान्योक्तमिति सूचयितुं सूत्रितं व्याख्यात इति । तेन जन्ममरणप्रबन्धरूपप्रेत्यभावोच्छेदलक्षणनिःश्रेयसाभिलाषुकैरार्यधौरेयैस्तदुपदिष्टं कर्म यत्नतोऽनुष्ठातव्यमिति शिष्टं भवतीति वेद्यम् ॥ १७ ॥

अनादौ संसारे स्थितमिदमहो मूढमनसां
जनित्वा जन्तूनां मरणमथ मृत्वापि जननम् ।
इयं सा दुःखानां सरणिरिति सञ्चिन्त्य कृतिभिः
विधातव्यं चेतो जननमरणोच्छेदिनि पदे ॥ १ ॥
दृष्टादृष्टफलं यस्य तादृशं कर्म वैदिकम् ।
सनिमित्तं द्वितीयेऽस्मिन्नाह्निके स्फुटमीक्षितम् ॥ २ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृतायां वैशेषिकसूत्रवैदिकवृत्तौ षष्ठाध्यायस्य द्वितीयमाह्निकम् ।

समाप्तश्चायं श्रौतधर्माध्यायः षष्ठः ॥ ६ ॥



# अथ सप्तमोऽध्यायः ।

## आद्यमाह्निकम् ।

द्रव्याणि कर्माणि च परीक्षितानि । शिष्यजिज्ञासानुरोधेन मध्ये श्रौतधर्मोऽपि परीक्षितः । सम्प्रति क्रमप्राप्तान् गुणान् सप्तमेऽस्मिन् परीचिक्षिषुरादौ विप्रकृष्टान् तान् स्मारयन्नाह—

**"उक्ताः गुणाः ॥ १ ॥**

उक्ता="**रूपरसगन्धस्पर्शाः संख्याः, परिमाणानि, पृथक्त्वं, संयोगविभागौ, परत्वापरत्वे, बुद्धयः, सुखदुःखे, इच्छाद्वेषौ, प्रयत्नाश्चे**ति सूत्रे कण्ठतश्चकारेण चोदिष्टा गुणाः=रूपादयो गुणाः परीक्ष्यन्ते इत्यर्थः ।

**यद्वा** कण्ठोक्ताः रूपादयो गुणा परीक्ष्यन्ते । नतु चकारेण समुच्चिताः गुरुत्वादयो गुणा इत्यर्थः ।

**तत्र—चक्षुर्मात्रग्राह्यो गुणो रूपम्** । तच्च नीलशुक्ललोहितहरितकपिशचित्रभेदात्सप्तविधं पृथिव्यप्तेजोवृत्ति । तत्र पृथिव्यां सप्तविधम् । अप्सु शुक्लं, तेजसि लोहितम् । १ । **रसनग्राह्यो गुणो रसः** । सच मधुराम्ललवणकटुकषायतिक्तभेदात् षड्विधः पृथिवीजलवृत्तिः । तत्र पृथिव्यां षड्विधः । जले मधुर एव । २ । **घ्राणग्राह्यो गुणो गन्धः** । स द्विविधः सुरभिरसुरभिश्च, पृथिवीमात्रवृत्तिः । ३ । **त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्शः** । सच शीतोष्णानुष्णाशीतभेदात् त्रिविधः पृथिव्यप्तेजोवायुवृत्तिः । तत्र शीतो जले। उष्णस्तेजसि। अनुष्णाशीत. पृथिवीवाय्वो । ४ । **एकत्वादिव्यवहारहेतुः सङ्ख्या**। सा नवद्रव्यवृत्ति ।एकत्वं नित्यगतं नित्यमनित्यगतमनित्यम्। द्वित्वादिकं तु परार्द्धपर्य्यन्तमपेक्षाबुद्धिजन्यत्वात्सर्वत्रानित्यम् । ५ ।

**एकं दशशतं चैव सहस्रमयुतं तथा ।**
**लक्षं च नियुतं चैव कोटिरर्बुदमेव च ॥ १ ॥**

**वृन्दं खर्वो निखर्वश्च शङ्खः पद्मश्च सागरः।**
**अन्त्यं मध्यं परार्धं च दशवृद्ध्या यथाक्रमम्॥ २॥**

**मानव्यवहारासाधारणकारणं परिमाणम्।** सर्वद्रव्यवृत्ति। तच्चतुर्विधम्—अणु, महत्, दीर्घं, ह्रस्वं च। ६। **पृथग्व्यवहारासाधारणकारणं पृथक्त्वम्।** सर्वद्रव्यवृत्ति। ७। **संयुक्तव्यवहारहेतुः संयोगः।** सर्वद्रव्यवृत्तिः। ८। **संयोगनाशको गुणो विभागः।** सर्वद्रव्यवृत्तिः। ९। **परापरव्यवहारासाधारणकारणे परत्वापरत्वे।** मूर्तद्रव्यवृत्तिनी। ते च द्विविधे—दिक्कृते, कालकृते च। दूरस्थे दिक्कृत परत्वम्। अन्तिकस्थे दिक्कृतमपरत्वम्। ज्येष्ठे कालकृतं परत्वम्। कनिष्ठे कालकृतमपरत्वम्। १०–११। **सर्वव्यवहारहेतुर्ज्ञानं बुद्धिः।** ज्ञानमुपलब्धिः प्रत्ययो बुद्धिरित्यनर्थान्तरम्। सा च द्विविधा– अनुभूतिः स्मृतिश्च। अनुभूतिरपि द्विविधा– विद्याऽविद्या च। यथार्थो विद्या, अयथार्थोऽविद्या। **तद्वति तत्प्रकारिकाऽनुभूतिर्विद्या,** सैव प्रमेत्युच्यते। **तदभाववति तत्प्रकारिकाऽनुभूतिरविद्या।** तत्र विद्या त्रिविधा– प्रत्यक्षा, लैङ्गिकी, शाब्दी च। प्रत्यक्षं प्रमाणं चक्षुरादीनीन्द्रियाणि, तज्जन्या प्रत्यक्षा। लिङ्गदर्शनमनुमानप्रमाणं, तज्जन्या लिङ्गिगोचरानुभूतिर्लैङ्गिकी। सैवानुमितिरिति कथ्यते। शब्दप्रमाणमाप्तोपदेश., तज्जन्या शाब्दी। सशयविपर्य्ययभेदादविद्याऽपि द्विविधा। **तत्रैकस्मिन् धर्मिणि विरुद्धनानाधर्मप्रकारकं ज्ञानं संशयः। अतस्मिँस्तद्बुद्धिर्विपर्य्ययः। संस्कारमात्रजन्या बुद्धिः स्मृतिः।** साऽपि द्विविधा–भावितसर्तव्या अभावितसर्तव्या च। स्वप्ने भावितसर्तव्या जाग्रत्समये त्वभावितसर्तव्येति बुद्धिप्रपञ्चः। १२। **धर्मजन्यमनुकूलवेदनीयं गुणः सुखम्।** १३। **अधर्मजन्यं प्रतिकूलवेदनीयं गुणो दुःखम्।** १४। **स्वार्थं वा परार्थं वाऽप्राप्तार्थप्रार्थनमिच्छा।** १५। **क्रोधो द्वेषः।** १६। **कृतिः प्रयत्नः।** १७। इति सप्तदश कण्ठोक्ता गुणाः। **आद्यपतनासमवायिकारणं गुरुत्वं।** पृथिवीजलवृत्ति। १। **आद्य-**

**स्यन्दनासमवायिकारणं द्रवत्वं**। तद् द्विविधं—सांसिद्धिकं नैमित्तिकं च। जले सांसिद्धिकं, नैमित्तिकं पृथिवीतेजसोरिति वैशेषिकाचार्य्याः। पृथिव्यामेवेति प्रत्यग्राः। सुवर्णादेरपि पार्थिवत्वाभ्युपगमात्। २। **सङ्ग्रहमृजादिहेतुर्गुणः स्नेहः**। जलमात्रवृत्तिः। तैलादौ च पार्थिवे द्रव्ये जलीय एवासौ प्रकृष्टत्वादग्नेरानुकूल्यं भजते। अपकृष्टस्नेहं हि जलमग्निं नाशयतीति भावः। ३। **सामान्यगुणात्मविशेषगुणोभयवृत्तिगुणत्वव्याप्यजातिमान् संस्कारः**। सच त्रिविधः—वेगो भावना स्थितिस्थापकश्च। तत्र **द्वितीयादिपतनासमवायिकारणं वेगः**। सच कर्मजवेगजभेदाद्द्विविधो मूर्त्तमात्रवृत्तिश्च। **अनुभवजन्या स्मृतिहेतुर्गुणो भावना**। जीवात्मवृत्तिः। **अन्यथाकृतस्य पुनः पूर्ववदवस्थापकः स्थितिस्थापकः**। कटशाखादिपृथिवीवृत्तिः। ४। **विहितकर्मजन्यो गुणो धर्मः**। ५। **निषिद्धकर्मजन्यो गुणोऽधर्मः**। ६। **श्रोत्रग्राह्यो गुणः शब्दः**। आकाशमात्रवृत्तिः। स द्विविधो—ध्वन्यात्मको वर्णात्मकश्च। ७। इति चकारेण समुच्चिताः सप्तेतिविवेकः।

**तत्र** रूपरसगन्धस्पर्शपरत्वापरत्वगुरुत्वद्रवत्वस्नेहवेगसुखदुःखभावनाद्वेषधर्माधर्माः **मूर्त्तगुणाः**। शब्दोऽ**मूर्त्तगुणः**। मूर्त्तेषु मरुदादिचतुर्ष्वनभिव्यक्तत्वात्।

संख्यापरिमाणपृथक्त्वसंयोगविभागबुद्धीच्छायत्नाः **मूर्त्तामूर्त्तोभयगुणाः**। संयोगविभागद्वित्वद्विपृथक्त्वादयो**ऽनेकाश्रिताः**। रूपरसगन्धस्पर्शैकत्वपरिमाणैकपृथक्त्वपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नगुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दाः **एकैकवृत्तयः**। शब्दस्पर्शरूपरसगन्धाः **बाह्यैकैकेन्द्रियग्राह्याः**। संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वस्नेहवेगाः **द्वीन्द्रियग्राह्याः**। जीवीयबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाः **मनोमात्रग्राह्याः**। ईश्वरीयबुद्धीच्छायत्नाः गुरुत्वधर्माधर्मभावनाश्च **अतीन्द्रियाः**। अपाकजरूपरसगन्धस्पर्शपरिमाणैकत्वैकपृथक्त्वगुरुत्वद्रवत्वस्नेहवेगाः **कारणगुणपूर्वकाः**। बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावना-

शब्दाः **अकारणगुणपूर्वकाः** । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दतूलपरिमाणोत्तरसंयोगनैमित्तिकद्रवत्वपरत्वापरत्वपाकजरूपादयः **संयोगजाः** । संयोगविभागवेगाः **कर्मजाः** । परत्वापरत्वद्वित्वद्विपृथक्त्वादयो **बुद्ध्यपेक्षाः** । रूपरसगन्धानुष्णस्पर्शशब्दपरिमाणैकत्वैकपृथक्त्वस्नेहाः **समानजात्यारम्भकाः** । सुखदुःखेच्छाद्वेषप्रयत्नाश्चा**समानजात्यारम्भकाः** ।

संयोगविभागसंख्यागुरुत्वद्रवत्वोष्णस्पर्शज्ञानधर्माधर्मसंस्काराः **समानासमानजात्यारम्भकाः** । रूपरसगन्धानुष्णस्पर्शसंख्यापरिमाणैकपृथक्त्वस्नेहशब्दाः **असमवायिकारणम्** । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाः **निमित्तकारणम्** । संयोगविभागोष्णस्पर्शगुरुत्वद्रवत्ववेगाः **उभयकारणम्** । परत्वापरत्वद्वित्वद्विपृथक्त्वादिकम्—**अकारणम्** । संयोगविभागशब्दाः **अव्याप्यवृत्तयः** । शिष्टाः **व्याप्यवृत्तय** इति तदवान्तरविशेषः ॥ १ ॥

गुणान् संस्मार्य्य तत्परीक्षामारभते—

**"पृथिव्यादिरूपरसगन्धस्पर्शाः द्रव्यानित्यत्वादनित्याश्च ॥ २ ॥**

चकारेण परिमाणैकत्वैकपृथक्त्वसांसिद्धिकद्रवत्वगुरुत्वस्नेहाः समुच्चीयन्ते । पृथिव्यादिरूपरसगन्धस्पर्शाः=पृथिव्यप्तेजसां रूपादयो गुणाः द्रव्यानित्यत्वात्=आश्रयभूतद्रव्यानित्यत्वादनित्याः=विनाशप्रतियोगिनो मन्तव्या इत्यर्थः ॥ २ ॥

---

१. तत्र भावनान्ता आत्ममनःसंयोगजाः, शब्दो भेर्याकाशसंयोगजः, तूलपरिमाणं प्रचयाख्यसंयोगजम्, उत्तरसंयोगः संयोगजसंयोगः, नैमित्तिकद्रवत्वं वह्निसंयोगजं, परत्वापरत्वे दिक्कालपिण्डसंयोगजे, पाकजरूपादयो वह्निसंयोगजाः ।

२. संयोगात् समानजातीय उत्तरसंयोगः, विजातीयं द्वितूलके महत्परिमाणं, विभागाद्विभागः शब्दश्च, कारणगतैकत्वसंख्यातः कार्यवर्त्तिन्येकत्वसंख्या, द्वित्वबहुत्वसंख्याभ्यां चाणुत्वमहत्त्वे, गुरुत्वाद् गुरुत्वान्तरं पतनं च, द्रवत्वाद् द्रवत्वान्तरं स्यन्दनक्रिया च, उष्णस्पर्शादुष्णस्पर्शः पार्थिवपरमाणुरूपादयश्च, ज्ञानाज्ज्ञानं संस्कारश्च, धर्माद्धर्मः सुखं च, अधर्मादधर्मो दुःखं च, संस्कारात् संस्कारः स्मरणं च ।

पृथिव्यादिष्वनित्येषु रूपादीनामनित्यत्वमभिधाय नित्येषु तेषां नित्यत्वमर्थबललभ्यमाह—

**"एतेन नित्येषु नित्यत्वमुक्तम् ॥ ३ ॥**

एतेन=पृथिव्यादिषु वर्तमानानां रूपादीनामाश्रयानित्यत्वादनित्यत्ववचनेन नित्येषु=नित्यद्रव्येषु तेषु वर्तमानानां तेषां नित्यत्वं=विनाशाप्रतियोगित्वमुक्तम्=अर्थादुक्तं वेदितव्यमित्यर्थः ॥ ३ ॥

रूपादीनां सामान्यतो नित्येषु नित्यत्वमनित्येषु चानित्यत्वमुक्तम् । इदानीं तत्र विशेषं वक्तुं सङ्कोचमाह—

**"अप्सु तेजसि वायौ च नित्याः द्रव्यनित्यत्वात् ॥ ४ ॥**

द्रव्यनित्यत्वात्=आश्रयभूतद्रव्यस्य नित्यत्वाद् ये तदाश्रिता गुणाः नित्याः उक्ताः, तेऽप्सु=जलपरमाणुषु तेजसि=तेजःपरमाणुषु वायौ च=सर्वत्र नभस्वति च नित्याः=विनाशाप्रतियोगिनो वेदितव्याः न पृथिव्यामित्यर्थः॥४॥

**ननु** नित्यवत्किमनित्येष्वप्यस्तिकश्चिद्विशेषः ? तत्राह—

**"अनित्येष्वनित्याः द्रव्यानित्यत्वात् ॥ ५ ॥**

अनित्येषु=अनित्यद्रव्येषु अनित्याः=तदाश्रिताः रूपादयो गुणाः सर्वत्रानित्याः निश्चेतव्याः, कुतः ? द्रव्यानित्यत्वात्=तदाश्रयभूतद्रव्यानित्यत्वादित्यर्थः । नास्ति कश्चिद्विशेष इति भावः ॥ ५ ॥

**ननु** जलादिपरमाणुवत्पृथिवीपरमाणूनामपि नित्यत्वात्तदाश्रिताः गुणाः कस्मान्न नित्याः ? तत्राह—

**"कारणगुणपूर्वकाः पृथिव्यां पाकजाः ॥ ६ ॥**

यत इति शेषः । यस्मात्पृथिव्याम्=अवयविरूपायां पृथिव्यां पाकजाः=रूपादिपरावृत्तिहेतुतेजःसंयोगविशेषः पाकः, तस्माज्जाताः=परावृत्तिं गताः रूपरसगन्धस्पर्शाः गुणाः कारणगुणपूर्वकाः=अवयविनः कारणमवयवाः, तेषां गुणाः पूर्वं=कारणं येषां, ते तथा=स्वकारणगुणासमवायिकारणकाः प्रादुर्भवन्तीत्यर्थः ।

**आमद्रव्यस्यावयविनो** घटादेस्तेजःसंयोगविशेषाद् येयं रूपरसगन्धस्पर्शानां परावृत्तिः, नच सा तत्रैव भवितुमर्हति, बहिरन्तःसर्वेष्ववयवेषु

वर्तमानस्यावयविनो बाह्ये देशे वर्तमानेन तेजःसंयोगेनान्तर्वर्त्तिनां तेषां परावृत्तेरसंभवात् । तत्परावृत्त्यर्थं तेजःपरमाणूनामन्तःप्रवेशायावयविनः सान्तरत्वाभ्युपगमस्तु न साधीयान् । तत्परमाणूनां निर्भागत्वेन सान्तरत्वाभावात् । द्व्यणुकस्य सान्तरत्वे तदारम्भकपरमाण्वोरसंयोगस्यावश्यवक्तव्यतया तदुत्पादायोगात् । त्र्यणुकादीनां च सान्तरत्वे द्व्यणुके तत्परावृत्त्यनुपपत्तेस्तादवस्थ्यात् । अतोऽशेषे तस्मिन्नवयविनि रूपादिपरावृत्त्यर्थं बलवत्तेजःसंयोगविशेषेणाऽऽपरमाणुभ्य आच कपालादेः कर्मोत्पत्त्या परस्परविभागतः परस्परसंयोगनाशेऽसमवायिकारणनाशादवयविनि विनष्टे स्वतन्त्रभूतेषु परमाणुषु रूपादिपरावृत्तिरेष्टव्या । तत्र तत्परावृत्तौ च पुनर्भोगिनामदृष्टेनोत्पन्नपाकजरूपादिषु तेषु कर्मोत्पत्त्या परस्परसंयोगाद् द्व्यणुकादिक्रमेणारब्धे तस्मिन्नवयविनि कारणगुणपूर्वकः पाकजगुणारम्भ इति न पृथिवीपरमाण्वाश्रिताः रूपादयो गुणाः नित्या इति भावः ।

**तत्र** परावृत्तिं गतेषु पार्थिवपरमाणुरूपादिषु परमाणवः समवायिकारणम् । तेजःसयोगोऽसमवायिकारणम् । अदृष्टादिकं निमित्तकारणम् । द्व्यणुकादिरूपप्रभृतिषु च द्व्यणुकादिकं समवायिकारणं, कारणरूपादिकं चासमवायिकारणमिति विवेकः ॥ ६ ॥

**ननु** पृथिव्यां पाकजाः गुणाः कारणगुणपूर्वकाः भवन्तीति नोपपद्यते। कारणगुणानां कार्येऽसत्त्वेन सामानाधिकरण्याभावात् । तत्राह—

**"एकद्रव्यत्वात् ॥ ७ ॥**

पूर्वसूत्रं समग्रमनुवर्तते । एकद्रव्यत्वात्=स्वसमवायिसमवायसंबन्धेन कार्य्यलक्षणमेकं द्रव्यमाश्रयतया विद्यते येषां कारणगुणानां, ते तथा, तेषां भावस्तत्त्वं, तस्मात्=परम्परासंबन्धेन कार्यलक्षणैकद्रव्याश्रयत्वात्सामानाधिकरण्यसंभवे कारणगुणपूर्वकाः पृथिव्यां पाकजाः गुणाः सम्भवन्तीत्यर्थः ।

**यद्यपि** कार्य्यैकार्थप्रत्त्यासत्त्या सामानाधिकरण्यं नास्ति, तथापि कारणैकार्थप्रत्यासत्त्या विद्यते । अतो न काचिदनुपपत्तिरिति भावः ॥ ७ ॥

**रूपरसगन्धस्पर्शान्** चतुरो गुणान् परीक्ष्य क्रमप्राप्तसंख्यागुणमुल्लङ्घ्य परिमाणं परीक्षयिष्यन्नादौ तत्सद्भावसाधकं पूर्वप्रकरणं स्मारयति—

**"अणोर्महतश्चोपलब्ध्यनुपलब्धी नित्ये व्याख्याते ॥८॥**

नित्ये="**सदकारणवन्नित्यम्**" इत्यादिके चतुर्थाध्यायेऽणोः=अणुपरिमाणकस्य महतश्च=महत्परिमाणकस्य च द्रव्यस्योपलब्ध्यनुपलब्धी= "**अल्पाच्तरम्**" इत्युपलब्धिशब्दस्य पूर्वप्रयोगः, तेन यथाविग्रहमन्वयः, अणोरनुपलब्धिः=अप्रत्यक्षं महतश्चोपलब्धिः=प्रत्यक्षं व्याख्याते= कथिते इत्यर्थः।

**तथा**चास्ति द्रव्यप्रत्यक्षकारणतया स्वयं च प्रत्यक्षविषयतया कश्चिद्गुणः परिमाणमिति भावः।

**तत्रा**णु महद् दीर्घं ह्रस्वं चेति चतुर्विधं परिमाणम्। यत्खलु रूपसहायं सदपि स्वाश्रयं न प्रत्यक्षयति तदणु। यच्च रूपसहायं सत्स्वाश्रयमध्यक्षयति तन्महत्। ह्रस्वत्वदीर्घत्वे त्वणुत्वमहत्त्वसहभूते। न तत्र कश्चिद् विशेषः। तच्चैतच्चतुर्विधं परिमाणं नित्यानित्यभेदाद् द्विविधम्। तथाच "**नित्ये नित्यमनित्येऽनित्यम्**" इति वक्ष्यति। यन्नित्यं तत् परमोपपदेन, यच्चानित्यं तन्मध्यमोपपदेन, व्यपदिश्यते। तत्र परमाणुत्वं परमह्रस्वत्वं जीवात्मसु परमाणुषु च, मध्यमाणुत्वं मध्यमह्रस्वत्वं द्व्यणुके। परममहत्त्वं परमदीर्घत्वं खकालदिक्षु, परमात्मनि च। खादिषु सापेक्षं, परमात्मनि च निरपेक्षमिति विशेषः। मध्यममहत्त्वं मध्यमदीर्घत्वं च मनस्सु, त्र्यणुकमारभ्य सर्वावयविषु चेति विवेकः॥ ८॥

**ननु** त्र्यणुकादौ महत्त्वं कुतो जायते? तत्राह—

**"कारणबहुत्वाच्च ॥ ९ ॥**

चकारेण महत्त्वप्रचयौ समुच्चिनोति। स्वाश्रयसमवायिकारणगतसंख्याबहुत्वात्, स्वाश्रयसमवायिकारणगतमहत्परिमाणात्, शिथिलाख्यः संयोगः प्रचयः, तस्माच्च त्र्यणुकादौ महत्त्वमुत्पद्यते इत्यर्थः।

**तत्र** त्र्यणुकमहत्त्वे द्व्यणुकत्रयगतं संख्यात्रित्वमसमवायिकारणं, न तद्गतं परिमाणम्। तस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वनियमेन त्र्यणुकाणुतरत्वप्रसक्तेर्द्व्यणुकपरिमाणस्य तत्रासमवायिकारणत्वासम्भवात्। चतुरणुकादिमहत्त्वे त्र्यणुकादिमहत्परिमाणं, घटादिमहत्त्वे च कपालादि-

महत्त्वं, द्वाभ्यां तूलकपिण्डाभ्यामारब्धे तूलकपिण्डे च यन्महत्त्वं, तत्र द्वितूलकपिण्डयोः प्रचयोऽसमवायिकारणमिति विवेकः ॥ ९ ॥

ननु भवतु कारणबहुत्वादिकारणकं त्र्यणुकादौ महत्परिमाणं, द्व्यणुकादौ पुनरणुपरिमाणं किंकारणकं विज्ञेयं ? तत्राह—

"अतो विपरीतमणु ॥ १० ॥

अतः=परिमाणाश्रयसमवायिकारणगतं यत्सङ्ख्याबहुत्वम्, अस्माद् विपरीतं=विपरीतकारणकम्=परिमाणाश्रयसमवायिकारणगतं यत् संख्याद्वित्वं, तदसमवायिकारणकमणु=द्व्यणुकगतमणुपरिमाणं विज्ञातव्यमित्यर्थः ।

द्वाभ्यां परमाणुभ्यामारब्धं हि द्व्यणुकं, तत्परिमाणे च न परमाणुगतं परिमाणमसमवायिकारणं सम्भवति, परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वनियमेनाणुतरत्वप्रसङ्गात्, अपि च सर्गादौ जीवबुद्धीनामसत्त्वेनेश्वरापेक्षाबुद्धिजन्यं परमाणुगत द्वित्वमिति भावः ॥ १० ॥

ननु द्व्यणुकएवानित्यमणुपरिमाणमित्ययुक्तं, लोके "बिल्वापेक्षयाऽऽमलकमणु, कुवलयापेक्षयाचामलकं महत्" इति तद्भिन्नेऽप्यण्वादिव्यवहारदर्शनात्, तत्राह—

"अणु महदिति तस्मिन् विशेषभावाद्विशेषाभावाच ११

विशेषभावात्=महत्परिमाणप्रकर्षो विशेषः, तस्य कुवलयमपेक्ष्यभावात्=सत्वात्, विशेषाभावाच्च=बिल्वमपेक्ष्य तादृग्विशेषासत्त्वाच्च तस्मिन्=आमलकादौ सर्वस्मिन्नणुमहदिति=प्रकारेऽयमितिशब्दः, यथायोग्यंचान्वयः, महदिति प्रकारकोऽण्विति प्रकारकश्च व्यवहार इत्यर्थः ।

तत्र महदिति व्यवहारो मुख्यः, तस्मिन् वस्तुतो महत्त्वप्रकर्षाभावेऽपि महत्त्वसामान्यस्य सत्त्वेन सापेक्षप्रकर्षस्यापि सद्भावात्, अण्विति च भाक्तः, अणुत्वस्य तत्र वस्तुतोऽसत्त्वादिति विवेकः ।

तस्मिन्=आमलकादौ विशेषभावात्=महत्त्वविशेषस्य सत्त्वान्महदिति व्यवहारो मुख्यः । विशेषाभावाच्च=अणुत्वविशेषाभावाच्चाण्विति व्यवहारो भाक्त इत्यर्थ इति शङ्करमिश्रः ॥ ११ ॥

**ननु** कुतस्तस्मिन्नण्विति व्यवहारो भाक्तो महदिति व्यवहारश्च मुख्यः? तत्राह—

**"एककालत्वात् ॥ १२ ॥**

अणुमहदिति तस्मिन्नित्यनुवर्तते। तस्मिन्नणुमहदिति व्यवहारद्वयस्य समानकालकत्वादित्यर्थः।

**न**ह्येकस्मिन्नैककालिकं परस्परविरुद्धं व्यवहारद्वयं मुख्यमुपपद्यते। वस्तुनि विकल्पासम्भवात्। अतस्तत्रैको मुख्योऽपरश्च भाक्त इत्यवश्यं वक्तव्यम्। नच महदिति व्यवहारो भाक्तो भवितुमर्हति। महत्त्वस्य तत्रानुभवसिद्धत्वात्। अपि च पारिशेष्यादण्वितिव्यवहार इतिभावः॥ १२॥

**त**त्रैव हेत्वन्तरं समुच्चिनोति—

**"दृष्टान्ताच्च ॥ १३ ॥**

अणुमहदिति तस्मिन्नित्यनुवर्तते। यथैकस्मिन् दीर्घे काष्ठवस्तुनि दीर्घतरकाष्ठान्तरापेक्षया ह्रस्वमिति व्यवहारो भाक्तः, लघुभूतकाष्ठान्तरापेक्षया च दीर्घमिति मुख्यः, यथा वा देवदत्तसेनातो महती रणलब्धवर्णा यज्ञदत्तसेना, सैव चाण्वी विष्णुमित्रादिसेनात इत्याद्युदाहरणं दृष्टान्तः, दृश्यते ह्यत्रान्तः=परिच्छेदो वस्तुन इति, तस्माच्च तस्मिन्नण्विति व्यवहारो भाक्तो महदिति व्यवहारश्च मुख्य इत्यर्थः।

**ए**तेनावाद्यपेक्षया भूमिरण्वी, भारतखण्डापेक्षया च महती, व्योमाद्यपेक्षया जलादिकमणु, भूम्यपेक्षया च महत्, जलाद्यपेक्षया व्योमादिकं महत्, प्रकृत्यपेक्षया चाणु, व्योमाद्यपेक्षया महती प्रकृतिः, ईश्वरापेक्षया चाण्वी, नचेश्वरसमः कश्चिदधिको वा कश्चिदीश्वराद् विद्यते, तस्मात्स एवैकः परमार्थतो महान् इत्यादि व्यवहारोऽपि व्याख्यातो द्रष्टव्यः॥ १३॥

**ननु** भवतु द्व्यणुकादन्यत्र त्र्यणुकादौ सर्वत्राण्विति व्यवहारो भाक्तः, तत्राणुत्वाभावात्, महत्त्वस्य च सत्त्वात्, परन्तु द्रव्यवदणुत्वमहत्त्वयोरणुत्वमहत्त्वे किं न स्याताम्, अणुमहदिति संज्ञाऽविशेषात्, तत्राह—

**"अणुत्वमहत्त्वयोरणुत्वमहत्वाभावः कर्मगुणैर्व्याख्यातः ॥ १४ ॥**

अणुत्वमहत्त्वयोः=अणुत्वे महत्त्वे चाणुत्वमहत्त्वाभावः=यथासंख्यमन्वयः, अणुत्वाभावो महत्त्वाभावश्च कर्मगुणैः=हेतौ तृतीया, कर्माभाववद्भिः कर्मभिर्गुणाभाववद्भिर्गुणैश्च व्याख्यातः=निरूपितो वेदितव्य इत्यर्थः ।

**यथा** कर्माणि न कर्मवन्ति, गुणाश्च न गुणवन्तः, तथाऽणुत्वं नाणुत्ववत्, महत्त्वञ्च न महत्त्ववत्, स्वस्य स्वभावानुपपत्तेरिति भावः ।

**यथा** गुणकर्मणी नाणुत्वमहत्त्ववती, तथाऽणुत्वमहत्त्वे अपि नाणुत्वमहत्त्ववती, इत्यर्थ इति शङ्करमिश्रः ॥ १४ ॥

**नन्वणुत्वमहत्त्वयोरणुत्वमहत्त्वाभावः** कर्मगुणैर्व्याख्यात इति नोपपद्यते, कर्मसु कर्माभावस्य गुणेषु च गुणाभावस्याव्याख्यानात्, तत्राह—

**"कर्मभिः कर्माणि गुणैश्च गुणाः व्याख्याताः ॥ १५ ॥**

कर्मभिः=हेतौ तृतीया, उत्क्षेपणादिकर्मभिः कर्माणि=उत्क्षेपणादीनि कर्माणि व्याख्यातानि=विपरिणम्यान्वयः, तत्तत्कर्माभाववन्ति व्याख्यातानि, गुणैश्च=रूपादिभिर्गुणैश्च गुणाः=रूपादयो गुणाः व्याख्याताः=तत्तद्गुणाभाववन्तो व्याख्याताः द्रष्टव्या इत्यर्थः ।

**द्रव्यं** तावत्कर्मणा वा गुणेन वा विशेष्टुं शक्यते । न कर्म न गुणः । स्वस्य स्वविशेषकत्वानुपपत्तेः, अन्यथा देवदत्तो गृहं गच्छति, यज्ञदत्तो दण्डमुत्क्षिपति, नीलो घटः शुक्लः पट इत्यादिवद् "गच्छति गमनम्, उत्क्षेपणमुत्क्षिपति" इत्यपि स्यात् । न तथा भवति, तस्मात्प्रतिपद्यते—कर्मत्वादेव कर्माणि न कर्मवन्ति, गुणाश्च न गुणवन्त इति भावः॥१५॥

**ननु** माभूद्गुणकर्मणोर्गुणकर्माश्रयत्वम्, अणुत्वमहत्त्वाश्रयत्वं तु स्यात् । अणूनि कर्माणि महान्ति कर्माणि, तथाणवो गुणाः महान्तो गुणा इति व्यवहारदर्शनात्, तत्राह—

**"अणुत्वमहत्त्वाभ्यां कर्मगुणाश्च ॥ १६ ॥**

व्याख्यता इत्यनुवर्तते । अणुत्वमहत्त्वाभ्याम्=अणुत्वमहत्त्वाभाववद्भ्यामणुत्वमहत्त्वाभ्यां कर्मगुणाश्च=कर्माणि गुणाश्च व्याख्याताः=अणुत्वमहत्त्वाभाववन्तो व्याख्याताः वेदितव्या इत्यर्थः ।

**अणोर्भावो** ह्यणुत्वं, महतो भावश्च महत्त्वं, नचैतदणुत्वस्य मह-

त्त्वस्य च भावः सम्भवति। स्वस्य स्वभावानुपपत्तेः। परिमाणं च गुणः, कर्मापि गुणसमकक्षः, ततो भवति प्रतिपत्तिः "यथाऽणुत्वमहत्त्वे नाणुत्वमहत्त्ववती, तथा कर्माणि गुणाश्च नाणुत्वमहत्त्ववन्त" इति भावः।

**यथा** कर्म गुणश्च नाणुत्वमहत्त्वाश्रयस्तथा सामान्यं समवायो विशेषोऽपि द्रष्टव्यः। समानयोगक्षेमत्वात्॥ १६॥

अणुत्वमहत्त्वे परीक्ष्य ह्रस्वत्वदीर्घत्वयोस्तत्परीक्षातिदेशमाह—

**"एतेन दीर्घत्वह्रस्वत्वे व्याख्याते॥ १७॥**

एतेन=अणुत्वमहत्त्वयोरणुत्वमहत्त्वाभाववत्तया व्याख्यानेन दीर्घत्वह्रस्वत्वे=तदेकार्थसमवेते ह्रस्वत्वदीर्घत्वे अपि व्याख्याते=ह्रस्वत्वदीर्घत्वाभाववती व्याख्याते वेदितव्ये इत्यर्थः।

**यत्राणुत्वं** तत्रैव ह्रस्वत्वं, यत्र च महत्त्वं तत्रैव दीर्घत्वम्। यदेवाणुत्वोत्पादकं, तदेव ह्रस्वत्वोत्पादकम्। यदेव च महत्त्वोत्पादकं, तदेव दीर्घत्वोत्पादकम्। यथाऽणुत्वं नाणुत्ववत्, महत्त्वं च न महत्त्ववत्। तथा ह्रस्वत्वमपि न ह्रस्वत्ववत्, दीर्घत्वं च न दीर्घत्ववदिति भावः।

**कारणाभेदेऽपि** कार्य्यभेदो 'महत्सु दीर्घमानीयतां, दीर्घेषु च महदानीयताम्' इत्यादि व्यवहारादुपपद्यते। समानयोगक्षेमयोश्चैकत्र वृत्त्यविरोधान्नैकस्मिन्नपि परिमाणद्वयवृत्त्यनुपपत्तिरिति निश्चेयम्॥ १७॥

**ननु** किमिदं चतुर्विधं परिमाणमनित्यम्, उत नित्यं? तत्राह—

**"अनित्येऽनित्यम्॥ १८॥**

तदेतच्चतुर्विधं परिमाणमनित्ये=नित्यभिन्ने जनिविनाशयोगिनि द्रव्येऽनित्यं=तद्विनाशानुविनाशयोगीत्यर्थः॥ १८॥

**ननु** भवत्वनित्येऽनित्यं, नित्ये तत् कीदृशं? तत्राह—

**"नित्ये नित्यम्॥ १९॥**

नित्ये=नित्यद्रव्ये वर्तमानमेतन्नित्यं=सततभावीत्यर्थः।

**आश्रयनाशेनैव** परिमाणनाशस्य नियमादिति भावः॥ १९॥

**ननु** किन्तन्नित्यं परिमाणं? तत्राह—

**"नित्यं परिमण्डलम्॥ २०॥**

परिमण्डलं=परमाणुपरिमाणस्येयं तान्त्रिकी परिभाषा, परमाणुपरिमाणं नित्यम्=आश्रयनित्यत्वान्नित्यमित्यर्थः ।

स्वार्थप्रत्ययात् **'पारिमण्डल्यम्'** इत्यपि वैशेषिकानां परमाणुपरिमाणस्य पारिभाषिकी संज्ञेति बोद्धव्यम् ॥ २० ॥

**ननु** परिमण्डलसद्भावे किं प्रमाणं? तत्राह—

**"अविद्या च विद्यालिङ्गम् ॥ २१ ॥**

अविद्या च=कुवलयामलकबिल्वेषु समिदिक्षुप्रभृतिषु च पारमार्थिकाणुत्वह्रस्वत्वाभाववत्सु जायमानमणुत्वह्रस्वत्वप्रकारकं ज्ञानमविद्या, सा च नियमेन विद्यापूर्वकत्वाद् विद्यालिङ्गं=पारमार्थिकाणुत्वह्रस्वत्वगोचरविद्यायां लिङ्गं=प्रमाणमित्यर्थः ।

**विद्या**पूर्विका ह्यविद्येति नियम', सदसदनिर्वचनीयख्यातित्रयनिरासेनान्यथाख्यात्यभ्युपगमात्। विद्या च तद्वति तत्प्रकारिका संवित्। अतो भवति प्रतिपत्तिः 'अस्ति क्वचित्पारमार्थिकमणुत्वं ह्रस्वत्वं च परिमाणद्वयं' यद्गोचरविद्यापूर्विकेयमविद्येति भावः ॥ २१ ॥

**परमा**णुषु नित्यमणुपरिमाणं सप्रमाणमभिधायेश्वराकाशयोर्नित्यं महत्परिमाणं हेतुनाऽभिदधाति—

**"विभवान्महानाकाशस्तथाचात्मा ॥ २२ ॥**

विभवात्=**सोपसर्गाद् भवतेरच्,** विभुभावादाकाशः=नाको-महान्=परममहत्परिमाणवान्, तथा चात्मा=सामान्यशब्दोऽयम्, अत्राकाशसन्निधानात्परमात्मानमाह, अग्रिमसूत्रे चानुवर्तमानो मनःसन्निधानाज्जीवात्मानमभिधास्यति, चोऽप्यर्थो भिन्नक्रमः, परमात्माऽपि तथा=विभवात्परममहत्परिमाणवानित्यर्थः ।

**तत्रा**काशे सापेक्षं महत्त्वम् । सर्वमूर्त्तद्रव्यसंयोगित्वं च विभुत्वम् । परमात्मनि च निरपेक्षं महत्त्वम् । सर्ववस्तुबहिरन्तर्वर्तमानत्वं च विभुत्वमिति विवेक. ॥ २२ ॥

**ननु** जीवात्मा किंपरिमाणकः? तत्राह—

**"तद्भावादणु मनः ॥ २३ ॥**

आत्मेत्यनुवर्तते। तदभावात्=विभवाभावान्मनआत्मा=मनोवानात्मा=जीवात्मेति यावदणु=अणुपरिमाण इत्यर्थः।

**वैशेषिकाः** हि सच्चित्स्वरूपं जीवात्मानमाहु। सच मिथ्याज्ञानपूर्वकान्मनःसम्बन्धाद् बध्यते। विवेकज्ञानेन मिथ्याज्ञाननिवृत्त्या सम्बन्धनिवृत्तौ च मुच्यते। न चास्यैतौ बन्धमोक्षौ स्वरूपनिबन्धनौ भवतः, सर्वदा तदन्यतरप्रसक्तेरवर्जनात्। अपिच स्वभावनिबन्धनौ युक्तौ। स्वभावश्च वस्तुमात्रस्यापर्य्यनुयोज्यः। तेन ह्ययं कदाचिन्मिथ्याज्ञानाद् बन्धं प्राप्नोति, विवेकज्ञानाच्च कदाचिन्मोक्षमधिगच्छति। बन्धं प्राप्नुवँश्च नायं स्वरूपतः किंचिदपक्षीयते। मोक्षं चाधिगच्छन्नायं स्वरूपतः किंचिदभिवर्द्धते। समानं खल्वस्य रूपं सर्वास्ववस्थासु भवति, न जातु प्रत्यवस्थं मात्रयापि विषमम्। अतएव चैनं वैदिकाः सर्वे नित्यशुद्धबुद्धमुक्तस्वभावमाचक्षते। विशेषस्तु तत्रेयानेव—यदयं बन्धावस्थायां मनःप्रतिबिम्बनेन तत्तादात्म्यमापन्नः स्वसमारोपितया तद्वृत्त्या सर्वान् सुखदुःखमोहात्मकान् बाह्याभ्यन्तरविषयानुपलभते, यत्रेदमुक्तं भवति—"**योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः, स समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव**" (वृ. अ. ६ ब्रा. ३—कं. ७)। इति। मोक्षावस्थायां च निवृत्ताखिलप्राकृतसम्बन्धः परमानन्दाब्धिना भगवता ब्रह्मणा तादात्म्यमापन्नः शोकादितो विनिर्मुच्य ब्रह्मैव भवन् स्वात्मना चिता तत्स्वरूपानन्दमुपभुङ्क्ते, यत्रेदमुक्तं भवति—"**जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः**" "**निरञ्जनः परमं साम्यमुपैति**" (मुं. ३—खं. १—२—३) "**ब्रह्मविदाप्नोति परम्**" (तै. ब्र. व. अनु. १—१) "**आनन्दं ब्रह्मणो विद्वान् न बिभेति कदाचन**" (तै. ब्र. व. अनु. ९) "**ब्रह्मैव सन् ब्रह्माप्यैति**" (वृ. अ. ६—ब्रा. ४—कं. ६) इत्यादि—इति। तत्र मनश्च प्राणेन्द्रियाधिष्ठातृ मध्यमपरिमाणं प्रारब्धकर्मणा यादृशं शरीरं प्रविशति, तादृशं भवति, **किंबहुना**—सङ्कुचिते तस्मिन् सङ्कोचमापद्यते, विस्तृते च विस्तारम्। एतदेव च सपरिवारं सङ्कोचविकाशशीलं चित्तं वैदिकैर्लिङ्गमिति परिभाष्यते।

यत्रेदमुक्तं भवति—"**तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य**" (बृ. अ. ६—ब्रा. ४—कं. ६) "**सप्तदशैकं लिङ्गम्**" (सां.अ. ३—सू. ८) इति। तच्चैतत्प्रकृतिकार्य्यत्वेऽपि सात्त्विकत्वात्प्रकाशस्वभावमात्मप्रतिबिम्बेन भानुवद् देदीप्यमानं भवदाऽऽनखाद्दा च मूर्ध्नः शरीरमात्रं दीपयति । स्वानुचरैश्च घ्राणादिभिरिन्द्रियैर्गन्धादीनर्थानादाय हृद्यन्तर्ज्योतिषं तं धीसचिव इव सम्राजं निवेदयति । स च शरीरैकदेशे हृदि स्थितोऽप्यपरिणामित्वात्स्वात्मभूतेन तेन युगपत्सर्वाङ्गीणं शैत्यं शिरोवेदनां पादसुखं च जानाति । जानँश्च सुखमिच्छति, दुःख च द्वेष्टि । ज्ञानेच्छादयश्चोत्पादविनाशशालिनः सर्वे विशिष्टस्यैव गुणाः भवन्ति, न केवलस्यात्मनः, तस्य कूटस्थनित्यत्वेन ज्ञानादिपरिणामानभ्युपगमात् । विशिष्टश्च मध्यमपरिमाण इति सर्वमनवद्यम् । केवलात्मा च नेश्वरवद् व्यापको भवितुमर्हति। व्यवस्थातस्तस्य नानात्वेन प्रत्येकस्मिन् शरीरे सर्वेषां तेषां विद्यमानतया कस्येदं शरीरमित्यनिर्धारणप्रसङ्गात् । सर्वात्मसन्निधौ क्रियमाणानां चादृष्टानां स्वयमनिर्धारिततया तन्निर्धारकत्वासम्भवात् । नापि तदभ्युपगमः श्रेयान् प्रतिभासते । कर्मफलप्रदातुरीश्वरस्येच्छया तत्तद्देशविशेषे तत्तददृष्टसम्बन्धोपपत्तौ फलानुपलम्भात् । किंचात्मत्वव्यापकत्वयोः साम्ये कस्मादेकस्तावदीश्वरो जातोऽपरश्च जीव इति विभुवादिनस्ते दुरुत्तरं प्रसज्यते । न च ज्ञानादिनित्यत्वानित्वाभ्यामित्येतदुत्तरं सदुत्तरं मन्तव्यम् । द्वयोः साम्ये कस्मादेकस्य ज्ञानादिकं नित्यं जातमपरस्य चानित्यमिति तत्रापि प्रश्नोपपत्तेः। न च स्वभावादित्येषा साध्वी कल्पना। प्रकारान्तरासंभवे स्वभावाश्रयणस्य युक्तत्वात् । नापि प्रत्यगात्मनो व्यापकत्वे किंचित्प्रमाणमुपलभ्यते । "**स वा एष महानजः**" (बृ.अ. ६—ब्रा. ४—कं.२२) इत्यादिश्रुतीनामीश्वरपरत्वेन तत्परत्वाभावात् । "**एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश** । (मुं. ३—खे. १—९) "**वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते**" (श्वे. अ. ५—९) इत्यादिभिरणुत्वपरैः श्रुत्यन्तैश्च विरोधेन तासां तत्परत्वकल्-

नाऽसंभवात्। न च "जीवोऽनणुः प्रत्यक्षगुणाश्रयत्वात् प्रत्यक्षत्वाच्च घटवत्" इत्यनुमानद्वयं प्रमाणम्। जीवशब्देन विशिष्टाभिधाने सिद्धसाधनात्। आत्ममात्राभिधाने च तत्र प्रत्यक्षगुणाश्रयत्व-योगीतरप्रत्यक्षत्वयोरनभ्युपगमेन हेत्वसिद्धेः। दुःखप्रागभावानधिकरणत्वोपाधेश्च। **एतेन** "जीवोऽनणुः, आत्मत्वात् अभूतत्वाच्च, ईश्वरवत्" इत्यनुमानद्वयं प्रमाणमित्यपि **निरस्तम्**। अत्रापि साधनावच्छिन्नसाध्यव्यापकस्य सर्वज्ञत्वादेरुपाधित्वात्। अन्यच्च नास्ति किंचित्प्रमाणम्। अतो व्यापकत्वाभावादव्यापकत्वसिद्धौ मध्यमपरिमाणस्यानित्यत्वेन निरस्ततया सिद्धः पारिशेष्यादणुपरिमाणो जीव इति भावः।

**यत्तु** मूर्तिपूजायां जीवव्यापकत्वसाधनं, **तत्तु** पौराणिकम्। अतः किं तेन। शङ्करमिश्रप्रभृतयस्तु सर्वे व्याख्यातारो मनःपरिमाणपरमेतत्सूत्रं व्याचक्षते। तन्न सम्यग्। **"अन्नमयँ हि सोम्य मनः"** (छां. प्रपा. ६—खं. ५—४) **"एतस्मात्प्रजायन्ते मनःसर्वेन्द्रियाणि च"** (मुं. २—खं. १—३) इत्यादिश्रुतिभिर्मनसो जन्युपलब्धेरणुत्वासम्भवात्। वैदिकसिद्धान्तप्रकाशनाय प्रवृत्तानां महर्षीणां दर्शने चौपनिषदवचोविरोधायोगात्। सापेक्षाणुत्वाभिप्रायेण व्याख्याने तु नास्ति कश्चिद् विरोध इति सर्वं चतुरस्रम्॥२३॥

**ननु** दिक्कालयोरपि परिमाणं व्याख्येयं? तत्राह—

**"गुणैर्दिग् व्याख्याता ॥ २४ ॥**

मण्डूकप्लुतिन्यायेन महतीति विपरिणम्यानुवर्तते। गुणैः=सकलद्वीपवर्त्तिपुरुषमात्रसाधारणपरापरव्यवहारासाधारणकारणसर्वमूर्त्तद्रव्यनिष्ठपरत्वापरत्वलक्षणगुणैर्दिक्=प्राच्यादिव्यपदेशभाग् दिग् व्याख्याता=महती व्याख्याता द्रष्टव्येत्यर्थः।

परापरव्यवहारस्तावत्सर्वत्राविशिष्टः, तदसाधारणकारणे च परत्वापरत्वे, तत्र च दिक्पिण्डसंयोगोऽसमवायिकारणम्। चेद् दिग् विभ्वी न भवेत्, तदा सर्वत्राविशेषेणोक्तव्यवहारो नोपजायेत। जायते च। तस्मात्सा विभ्वी, विभ्वीत्वाच्च महतीति भावः॥ २४॥

**"कारणेन कालः ॥ २५ ॥**

महानिति मण्डूकप्लुतिन्यायेन, व्याख्यात इति च विपरिणम्य पूर्ववदनुवर्तते । कारणेन=सर्वोत्पत्तिमन्निमित्तकारणत्वेन हेतुना कालः=कालपदार्थो महान् व्याख्यात इत्यर्थः ।

यावदुत्पत्तिमन्निमित्तकारणत्वं कालस्य विभुत्वं विना नोपपद्यते, विभुत्वाच्चाकाशादिवत्कालो महानिति भाव' ।

**"कारणे कालः"** इत्यपि प्रायः पाठः । तत्र च सर्वोत्पत्तिमतां कारणे निमित्ततया सम्बध्यमानः कालो महानित्यर्थः ॥ २५ ॥

**रूपं रसस्तथा गन्धः स्पर्शो मानं चतुर्विधम् ।**
**गुणोद्देशं च संस्मार्य्य प्रथमेऽस्मिन् परीक्षितम् ॥ १ ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृतायां वैशेपिकसूत्रवैदिकवृत्तौ सप्तमाध्यायस्याद्यमाह्निकम् ॥



# अथ सप्तमोऽध्यायः ।

## द्वितीयमाह्निकम् ।

परिमाणं परीक्ष्य संख्यां परीक्षितुकामः पूर्वन्तस्याः रूपादितोऽर्थान्तरत्वमाह—

**"रूपरसगन्धस्पर्शव्यतिरेकादर्थान्तरमेकत्वम् ॥ १ ॥**

एकत्वम्=एको घटः, एको मठ इत्यादिव्यवहारकारणमेकत्वमर्थान्तरं=रूपादिभ्योभिन्नोऽर्थः=भिन्नमिति यावत्, कुतः ? रूपरसगन्धस्पर्शव्यतिरेकात्=रूपादिकमुपलक्षणं, रूपादिव्यतिरेकेऽप्युक्तव्यवहारस्य जायमानत्वादित्यर्थः ।

एकत्वं चेद् रूपादितोऽर्थान्तरं न भवेत्, तदा यत्राकाशादौ रूपादिकं नास्ति, तत्रैकमाकाशमित्यादिकः संख्यानिबन्धनो व्यवहारो नोपजायेत । जायते च । ततो भवति प्रतिपत्तिः "एकत्वं रूपादितोऽर्थान्तरम्" इति भावः ।

अतिदिशति—

**"तथा पृथक्त्वम् ॥ २ ॥**

रूपरसगन्धस्पर्शव्यतिरेकादर्थान्तरामित्यनुवर्तते । तथा=यथैकत्वं तथा पृथक्त्वम्=एकपृथक्त्वं रूपरसगन्धस्पर्शव्यतिरेकाद् रूपादितोऽर्थान्तरमित्यर्थः ॥ २ ॥

**ननु** यथैको घटः, एको मठः, घटो मठात्पृथग्, मठो घटात्पृथग्, इत्यादिव्यवहाराद् घटमठादावेकत्वैकपृथक्त्वे, तथैकमेकत्वं, रूपादितः पृथक् पृथक्त्वमित्यादिव्यवहारादेकत्वैकपृथक्त्वयोरप्येकत्वैकपृथक्त्वे स्यातां, तत्राह—

**"एकत्वैकपृथक्त्वयोरेकत्वैकपृथक्त्वाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः ॥ ३ ॥**

एकत्वैकपृथक्त्वयोः=एकत्वे चैकपृथक्त्वे चैकत्वैकपृथक्त्वाभावः=यथासंख्यमन्वयः, एकत्वाभाव एकपृथक्त्वाभावश्चाणुत्वमहत्त्वाभ्याम्=अणुत्वमहत्त्वाभाववद्भ्यामणुत्वमहत्त्वाभ्यां व्याख्यातः=कथितो वेदितव्य इत्यर्थः ।

**यथा** ह्यणोर्भावोऽणुत्वं नाणुत्वे, महतो भावश्च महत्त्वं न महत्त्वे, तथै-

कस्य भाव एकत्वं नैकत्वे, पृथग्भावश्च पृथक्त्वं न पृथक्त्वे भवतः, स्वस्य स्वभावानुपपत्तेरिति भावः ॥ ३ ॥

**ननु** द्रव्यवद्गुणकर्मणोरप्येकत्वादिव्यवहारदर्शनात्सर्वसाधारणन्तावदेकत्वं किन्न स्यात्? तत्राह—

**"निःसंख्यत्वात्कर्मगुणानां सर्वैकत्वं न विद्यते ॥ ४ ॥**

कर्मगुणानां=कर्मणां गुणानाञ्च निःसंख्यत्वात्=संख्यातो निष्क्रान्तत्वात्=संख्याशून्यत्वादिति यावत्सर्वैकत्वं=सर्वसाधारणं=द्रव्यगुणकर्मसाधारणमेकत्वं=संख्या न विद्यते=न भवतीत्यर्थः

**द्रव्यस्यैव** गुणकर्माश्रयत्वाभ्युपगमादिति भावः ॥ ४ ॥

**ननु** कर्मगुणानाञ्चेन्निःसंख्यात्वं, तदा 'एकं कर्म, एकं रूपम्' इत्यादिज्ञानं तत्पूर्वकः शब्दव्यवहारश्च कथं स्यात्? तत्राह—

**"भ्रान्तं तत् ॥ ५ ॥**

तत्=एकं कर्मैकं रूपमित्यादि कर्मगुणसाधारणमेकत्वज्ञानं भ्रान्तं=भ्रमरूपं=न प्रमात्मकमित्यर्थः ।

**तस्मात्** तत्पूर्वकः शब्दप्रयोगोऽपि भाक्तः, स्वरूपाभेदश्चात्र भक्तिरिति भावः ॥ ५ ॥

**ननु** कर्मगुणयोरिव द्रव्येऽप्येकत्वज्ञानं भ्रान्तं, तत्पूर्वकः शब्दप्रयोगश्च भाक्तो भवतु, किन्तत्र परमार्थिकैकत्वाभ्युपगमेन, तत्राह—

**"एकत्वाभावाद्भक्तिस्तु न विद्यते ॥ ६ ॥**

एकत्वाभावात्=कुत्रापि मुख्यैकत्वानभ्युपगमाद् भक्तिस्तु=भाक्तशब्दप्रयोगप्रयोजिका भक्तिरेव न विद्यते=न स्वरूपं लभते इत्यर्थः ।

**भक्तिर्हि** समानो धर्मः=सादृश्यं=गुण इति यावत्, उभाभ्यां धर्मिभ्यां भज्यते=सेव्यते योऽसौ धर्मः, स भक्तिरिति तद् व्युत्पत्तेः । तन्निबन्धनः पदपदार्थयोः सम्बन्धोऽपि भक्तिः । ततः प्राप्तो भाक्तो गौणो लाक्षणिक इति च पर्य्यायः । सा च 'कस्य कुत्र' इति सापेक्षधर्मत्वादसति मुख्ये प्रतियोगिनि नोपपद्यते । न हि मुख्यसिंहाभावे कश्चिदमुख्यः सिंहः सम्भवति । तस्मादकामेनापि मन्तव्यम्— 'अस्ति मुख्यः कश्चित्सिंहः, यत्र सिंहशब्दप्रयो-

गो मुख्यः, पुरुषे च तदपेक्षभक्तिनिबन्धनो भाक्तः इति । तथैव द्रव्येऽपि, चेत् कर्मगुणयोरिव मुख्यमेकत्वं नाभ्युपगम्येत, तदा कुत्रापि तदभ्युपगमाभावात् तदपेक्षानियता भक्तिरपि तत्र न विद्येत । सुतरां च भाक्तः शब्दप्रयोगः । अतोऽवश्यं कुत्रापि पारमार्थिकं तावदेकत्वमभ्युपगन्तव्यम् । न च द्रव्यादन्यत्र तदभ्युपगमो युक्तः । तद्व्यतिरिक्तस्य सर्वस्य निर्गुणत्वेन गुणाश्रयत्वासम्भवात् । द्रव्ये तदभ्युपगतौ च पारमार्थिकैकत्वस्य तत्र सद्भावान्न तद्गोचरं ज्ञानं भ्रान्तं, न वा तत्पूर्वकः शब्दप्रयोगो भाक्त इति भावः । **एतेन** मुख्यमेकपृथक्त्वमपि द्रव्ये व्याख्यातमिति द्रष्टव्यम् ॥ ६ ॥

**ननु** स्यातामेकत्वैकपृथक्त्वे द्रव्ये मुख्ये, तथापि तस्य कार्य्यकारणभेदेन द्वैविध्याभ्युपगमात् तत्रोभयत्रैकत्वैकपृथक्त्वयोरेकत्वे **"कारणगुणपूर्वकाः कार्य्यगुणा भवन्ति"** इति कथमुपपद्येत ? तत्राह—

**"कार्य्यकारणयोरेकत्वैकपृथक्त्वाभावादेकत्वैकपृथक्त्वं न विद्यते ॥ ७ ॥**

कार्य्यकारणयोः=कार्य्ये कारणे चोभयत्रैकत्वैकपृथक्त्वाभावात्=एकत्वमभेदः, एकपृथक्त्वं चावैलक्षण्यं, तदभ्युपगमाभावादेकत्वैकपृथक्त्वम्=एकत्वमेकपृथक्त्वं च न विद्यते=एकं न वर्तते इत्यर्थः ।

**कार्य्ये** ह्यन्यदेकत्वैकपृथक्त्वं, कारणे चान्यत् । तयोः कार्य्यत्वकारणत्वाभ्यां भेदाभ्युपगमात् । न च कार्य्ये तदाकस्मिकं, किंतु कारणगुणपूर्वकम् । अतः "कारणगुणपूर्वकाः कार्य्यगुणा भवन्ति" इति नानुपपन्नमितिभाव ॥७॥

**ननु** यदेतत्कारणगुणपूर्वकत्वं व्याख्यातं, तत्किं सर्वत्रैकत्वादिसंख्यापृथक्त्वयोर्विज्ञातव्यं ? तत्राह—

**"एतदनित्ययोर्व्याख्यातम् ॥ ८ ॥**

एकत्वैकपृथक्त्वयोरिति विपरिणम्यानुवर्तते । एतत्=कारणगुणपूर्वकत्वमनित्ययोः=अनित्यगतयोरेकत्वैकपृथक्त्वयोरेव व्याख्यातं=व्याख्यातं द्रष्टव्यमित्यर्थः ।

**तत्र** 'एकं द्वे त्रीणि' इत्यादि व्यवहारहेतुः संख्या । सा चैकानैकद्रव्याश्रया । तत्रैकं द्रव्यं नित्यानित्यभेदाद् द्विविधम् । सा नित्यगता नित्या ।

अनित्यगता चानित्या । सैव कारणगुणपूर्विका । स्वाश्रयनाशेन च नाश्या । द्वित्वादिका परार्द्धपर्य्यन्ता चानेकद्रव्याश्रया । सा न कारणगुणपूर्विका । किंत्वपेक्षाबुद्धिपूर्विका । तन्नाशेन च नाश्या । तत्र च पदार्थद्वयादि समवायिकारणम् । तद्गतमेकत्वमसमवायिकारणम् । अपेक्षाबुद्धिर्निमित्तकारणम् । एकपृथक्त्वं चैकत्ववद्, द्विपृथक्त्वादिकं च द्वित्वादिवदिति विवेकः ॥ ८ ॥

क्रमप्राप्तं संयोगं परीक्षयति—

**"अन्यतरकर्मज उभयकर्मजः संयोगजश्च संयोगः ॥९॥**

अन्यतरकर्मजः=ययोर्द्वयोः संयोगः, तयोरन्यतरस्य कर्मणा जन्यः उभयकर्मजः=स्वाश्रयस्योभयस्य कर्मणा जन्यः । सयोगजश्च=कारणाकारणसंयोगजन्यश्च संयोगः=संयोगपदार्थो भवतीत्यर्थः ।

**तत्र** संयुक्तप्रत्ययहेतुरप्राप्तयोः प्राप्तिः संयोगः । स त्रिविधः—अन्यतरकर्मजः, उभयकर्मजः, संयोगजश्च । निष्क्रियस्य क्रियावता संयोगः प्रथमः, यथा महीधरस्य श्येनेन, विभुनश्च मूर्त्तेन । विरुद्धदिक्क्रिययोः सयोगो द्वितीयः, यथा मल्लस्य मल्लेन, मेषस्य च मेषेण । कारणाकारणसंयोगपूर्वकः कार्य्याकार्यसंयोगस्तृतीयः, यथाऽङ्गुलितरुसयोगाद्धस्ततरुसंयोगः, हस्ततरुसंयोगाद्वा शरीरतरुसयोगः, यथा वा तन्तुतरुसंयोगात्पटतरुसंयोगः, हस्तसंयुक्तदण्डामेध्यसयोगाद्वा शरीरामेध्यसंयोगः । सोऽयं त्रिविधः सन्नपि नोदनाभिघातभेदाद्द्विविधः, द्रव्यगुणकर्मजनकश्च पूर्वोपवर्णितरीत्या निश्चेय इति विवेकः ॥ ८ ॥

अतिदिशति—

**"एतेन विभागो व्याख्यातः ॥ १० ॥**

एतेन=संयोगत्रैविध्यव्याख्यानेन विभागः=तत्प्रतिद्वन्द्विविभागोऽपि व्याख्यातः=त्रिविधो व्याख्यात इत्यर्थः ।

**तत्र** विभक्तप्रत्ययहेतुः प्राप्तिपूर्विकाऽप्राप्तिर्विभागः । स च संयोगवत् त्रिविध—अन्यतरकर्मजः, उभयकर्मजः, विभागजश्च । श्येनमहीधरयोर्विभागः प्रथम । मल्लयोर्मेषयोश्च विभागो द्वितीयः । तृतीयस्तु द्विविधः—कारणविभागपूर्वक. कारणाकारणविभागः, कारणाकारणविभागपूर्वकः कार्य्या-

कार्य्यविभागश्चेति। पूर्वं कपाले कर्म, ततः कपालद्वयविभागः, ततो घटारम्भकसंयोगनाशः, ततो घटनाशः, ततस्तेनैव कपालविभागेन यः सकर्मणः कपालस्याकाशाद्विभागः, स प्रथमः। अङ्गुलिहस्ततन्तुक्रियातो जायमानेनाङ्गुलिहस्ततन्तुतरुविभागेन यो हस्तशरीरपटतरुविभागः, स द्वितीय इति विवेकः॥ १०॥

**ननु** संयोगविभागयोः संयोगविभागाभावाव्याख्याने तयोर्द्रव्यमात्रवर्तित्वनियमो न सङ्गच्छते, तत्राह—

**"संयोगविभागयोः संयोगविभागाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः॥ ११॥**

संयोगविभागयोः=संयोगे विभागे च संयोगविभागाभावः=यथासंख्यमन्वय, सयोगाभावो विभागाभावश्चाणुत्वमहत्त्वाभ्याम्=अणुत्वमहत्त्वाभाववद्भ्यामणुत्वमहत्त्वाभ्यां व्याख्यातः=प्रतिपादितो द्रष्टव्य इत्यर्थः।

यथाऽणुत्वमहत्त्वयोरणुत्वमहत्त्वे न स्तः, तथा संयोगविभागयोः संयोगविभागौ न भवत इति भावः॥ ११॥

**ननु** विस्तरेणैतद् व्याख्येयं, येन सम्यगधिगच्छेम? तत्राह—

**"कर्मभिः कर्माणि, गुणैश्च गुणा अणुत्वमहत्त्वाभ्यामिति॥ १२॥**

व्याख्यातमिति विपरिणम्यानुवर्तते। तदेतत् **"कर्मभिः कर्माणि गुणैश्च गुणा व्याख्याताः"** (वै. अ ७ आ. १ सू. १५) **"अणुत्वमहत्त्वाभ्यां कर्मगुणाश्च"** (वै. अ. ७ आ. १ सू १६) इत्यत्र विस्तरेण व्याख्यातमित्यर्थः॥ १२॥

**ननु** यथा कार्य्याकार्य्ययोः कारणाकारणयोश्च संयोगविभागौ प्रदर्शितौ, तथा कार्य्यकारणयोस्तौ कुतो न प्रदर्श्येते? तत्राह—

**"युतसिद्ध्यभावात्कार्य्यकारणयोः संयोगविभागौ न विद्येते॥ १३॥**

कार्य्यकारणयोः=कार्य्यकारणभूतयोर्द्रव्ययोः संयोगविभागौ=संयोगश्च

विभागश्च न विद्येते=न स्तः, कुतः ? युतसिद्ध्यभावात्=पृथग्भूतयोस्त-योरवस्थानासम्भवादित्यर्थः ।

युतसिद्ध्या नियतौ हि संयोगविभागौ । सा च परस्परमसम्बन्धिनोः सतोः पृथगवस्थितिः । न च सा कार्य्याकार्य्ययोः कारणाकारणयोरिव वा कार्य्यकारणयोः सम्भवति । कारणस्य कार्य्यासम्बन्धिनः सतः पृथगवस्थिति-सम्भवेऽपि कार्य्यस्य तदसम्भवात् । अतो न तयोस्तौ भवत इति भावः॥१३॥

संयोगसम्बन्धस्य प्रकृतत्वात्सम्बन्धत्वाविशेषेणोपस्थितं शब्दार्थयोः सम्बन्धं साङ्केतिकं निर्धारयिष्यन्नादौ तयोः संयोगादिकं प्रतिक्षिपति—

**"गुणत्वात् ॥ १४ ॥**

शब्दस्यार्थेन संयोगो न भवतीति प्रतिज्ञाशेषः । तत्र हेतुः—गुणत्वात्=गु-णपदार्थत्वादित्यर्थः ।

घटः पट इत्यादिकःशब्दः । स गुणः । घटपटादिरर्थः । स च द्रव्यम् । द्रव्यगुणयोश्च सतोस्तयोर्युतसिद्ध्यभावात्सयोगाभाव इति भावः ॥ १४ ॥

किंच—

**"गुणोऽपि विभाव्यते ॥ १५ ॥**

न केवलं द्रव्यम्, अपि च गुणोऽपि=गुणपदार्थोऽपि विभाव्यते=श-ब्देन प्रतिपाद्यते इत्यर्थः ।

गुणयोश्च सतोस्तयोर्न संयोगसम्बन्धसंभव इति भावः ॥ १५ ॥

संयोगाभावे हेत्वन्तरमाह—

**"निष्क्रियत्वात् ॥ १६ ॥**

शब्दस्य क्रियाशून्यत्वादर्थेन संयोगो न भवतीत्यर्थः ।

गुणत्वान्निष्क्रियः शब्दः, संयोगस्तु क्रियाजन्य इति भावः ।

आकाशादेर्विभवान्निष्क्रियत्वेनार्थकर्मजोऽपि संयोगो न सम्भवतीत्यपि द्रष्टव्यम् ॥ १६ ॥

संयोगाभावेऽन्यं हेतुमाह—

**"असति नास्तीति च प्रयोगात् ॥ १७ ॥**

भिन्नक्रमश्चः । असति=अविद्यमाने घटपटादिपदार्थे नास्तीति प्रयोगा-

त्=भविष्यतीति प्रयोगोऽपि द्रष्टव्यः, नास्ति घटो भविष्यति पट इत्यादि-प्रयोगदर्शनाच्च न शब्दस्यार्थेन संयोगः सम्भवतीत्यर्थः।

यन्न विद्यते, यच्चोत्पत्स्यते, तदुभयमसदिति शब्द्यते। तच्च शब्दो बोधयति। न च सम्बन्धमन्तरेणैतदुपपद्यते। सम्बन्धश्च सतोरेव भवति न सदसतोरिति भावः॥ १७॥

**ननु** मास्तु संयोगः किमतः? तत्राह—

**शब्दार्थावसम्बन्धौ॥ १८॥**

शब्दार्थौ=शब्दश्चार्थश्चासम्बन्धौ=सम्बन्धरहितौ सिद्धावित्यर्थः॥१८॥

**ननु** न नः केवलं संयोग एवैकः सम्बन्धः, समवायस्याप्यभ्युपगमात्, अतस्तयोरन्यतरः कश्चित्सेत्स्यति, कुतस्तदसम्बन्धसिद्धिः, तत्राह—

**"संयोगिनो दण्डात्, समवायिनो विशेषाच्च॥ १९॥**

पूर्वसूत्रमनुवर्तते। न, यथा, तथा, प्रत्ययो भवतीतिशेषः। दण्डात्=यथा दण्डदर्शनात्संयोगिनः=दण्डसंयोगिनः पुंसः प्रत्ययः=दण्डवान् पुरुषोऽयमिति प्रत्ययः, विशेषाच्च=अवयवविशेषदर्शनाच्च समवायिनः=अवयवसमवायिनः प्रत्ययः=हस्तीति प्रत्ययो भवति, न तथा शब्दश्रवणादर्थप्रत्ययः, अतस्तद-न्यतरसम्बन्धरहितौ शब्दार्थावित्यर्थः।

चेदर्थेन शब्दः संयुज्येत, तत्र वा समवेयात्, तदाऽवश्यं 'दण्डी पुरुषः, हस्ती कुञ्जरः' इत्यादि प्रत्ययवद् 'घटशब्दवान् घटोऽर्थः' इत्यादि प्रत्ययोऽपि जायेत। शब्देनार्थसंयोगे च मोदकाग्निक्षुरशब्दानामुच्चारणे मुखस्य पूर्णं दहनं पाटनं चोपलभ्येत। न च तथा प्रत्ययो जायते, न वा मुखस्य पूर्णादिकमुपलभ्यते। ततो भवति प्रतिपत्तिः "नास्ति शब्दार्थयोः संयोगो वा समवायो वा कश्चित् सम्बन्धः" इति भावः॥ १९॥

**ननु** चेदसम्बन्धौ शब्दार्थौ, तर्हि किन्निमित्तको नियमेन शब्दादर्थ-प्रत्ययः? तत्राह—

**"सामयिकः शब्दादर्थप्रत्ययः॥ २०॥**

शब्दात्=घटपटादिपदादर्थप्रत्ययः=घटपटादिपदार्थावबोधः सामयिकः= "अस्माच्छब्दादयमर्थो बोद्धव्यः" इति भगवन्नियोगात्मकः सङ्केतः समयः,

स एव च पदपदार्थयोः सम्बन्धस्य हेतुत्वात्सम्बन्धो वृत्तिरिति चानर्थान्तरं, तदवगतिनिबन्धनो भवतीत्यर्थः ।

यस्य पदस्य हि यस्मिन्नर्थे वृत्तिराप्तोपदेशादिना पूर्वमवगम्यते, तज्ज्ञानादेवास्य पुंसोऽर्थज्ञानमुत्पद्यते, नान्यज्ञानात्, अतस्तत्र तदवगतिरपि निमित्तम् । विषयिणो निमित्तत्त्वे विषयस्यापि निमित्तत्वात्सामयिकः शब्दादर्थप्रत्यय इति भावः ।

तत्र वृत्तिर्द्विविधा—शक्तिर्लक्षणा च । **पदपदार्थयोः साक्षात्सम्बन्धः शक्तिः** । तस्या आश्रयत्वात्पदं शक्तं, गोचरत्वादर्थः शक्यः । स च विशेषणतया जातेः प्रथममुपस्थितत्वाद् व्यक्तिलाभस्य चानुमानेन सम्भवाज्जातिरिति मीमांसकाः, गामानय इत्यादौ सर्वत्रानयनादेर्व्यक्तावेव सम्भवेन जातिविशिष्टा व्यक्तिरिति वैशेषिकाः । **पदपदार्थयोः परम्परासम्बन्धो लक्षणा** । तस्या आश्रयत्वात्पदं लाक्षणिकं, गोचरत्वादर्थो लक्ष्यः । सा च द्विविधा—केवललक्षणा, लक्षितलक्षणा च । **शक्यसाक्षात्सम्बन्धः केवललक्षणा** । सा च द्विविधा—जहल्लक्षणा, अजहल्लक्षणा च । गङ्गायां घोषः विषं भुंक्ष्व इत्यादौ प्रथमा, शक्यमनन्तर्भाव्यार्थान्तरप्रतीतेः । छत्रिणो यान्ति, मञ्चाः क्रोशन्ति काकेभ्यो दधि रक्ष्यतामित्यादौ द्वितीया, शक्यार्थमन्तर्भाव्यैवार्थान्तरप्रतीतेः । सोऽयं देवदत्त इत्यादौ तु विशिष्टवाचकपदानामेकदेशपरत्वेऽपि न काचिल्लक्षणा । शक्त्युपस्थितयोर्विशिष्टयोरभेदान्वयानुपपत्तौ विशेष्ययोः शक्त्युपस्थितयोरेवाभेदान्वयाविरोधात् । यथा घटोऽनित्य इत्यत्र घटपदवाच्यैकदेशघटत्वस्यायोग्यत्वेऽपि योग्यघटव्यक्त्या सहानित्यत्वान्वयः । यत्र हि पदार्थैकदेशस्य विशेषणतयोपस्थितिः, तत्रैव स्वातन्त्र्येणोपस्थितये लक्षणाऽभ्युपगमः, यथा घटो नित्य इत्यत्र घटपदाद् घटत्वस्य शक्त्या स्वातन्त्र्येणानुपस्थित्या तादृशोपस्थित्यर्थं घटपदस्य घटत्वे लक्षणेति । **शक्यपरम्परासम्बन्धो लक्षितलक्षणा** । यथा "द्विरेफो रौति" इत्यत्र द्विरेफपदस्य स्वशक्यरेफद्वयघटितभ्रमरपदप्रतिपाद्यत्वरूपपरम्परासम्बन्धेन मधुपे लक्षणा, सिंहो देवदत्त इत्यत्र च सिंहपदस्य स्वशक्यसम्बन्धिशौर्यको-

र्य्यादिगुणसम्बन्धेन पुरुषे लक्षणा। सर्वस्याश्चास्याः लक्षणायास्तात्पर्य्यानुपपत्तिर्बीजमिति विवेकः ॥ २० ॥

क्रमप्राप्ते परत्वापरत्वे परीक्षयति,—

**"एकदिक्काभ्यामेककालाभ्यां सन्निकृष्टविप्रकृष्टाभ्यां परमपरं च ॥ २१ ॥**

एकदिक्काभ्याम्=एका प्राची, प्रतीची वा दिगाश्रयो ययोर्मूर्त्तद्रव्ययोस्ताभ्यां सन्निकृष्टविप्रकृष्टाभ्यां=संयुक्तसंयोगाल्पीयस्त्वं सन्निकर्षः, संयुक्तसंयोगभूयस्त्वं विप्रकर्षः, तद्वद्भ्यां मूर्त्तद्रव्याभ्याम्, एककालाभ्याम्=एकः वर्तमानः कालः=समयो ययोर्जन्यद्रव्ययोस्ताभ्यां सन्निकृष्टविप्रकृष्टाभ्याम्=अल्पतरतपनपरिस्पन्दान्तरितजन्मत्वं सन्निकर्षः, बहुतरतपनपरिस्पन्दान्तरितजन्मत्वं विप्रकर्षः, तद्वद्भ्यां जन्यद्रव्याभ्यां परमपरंच=भावप्रधानो निर्देशः, दैशिकं कालिकं परत्वमपरत्वंचोत्पद्येते इत्यर्थः।

**परा**पराभिधानप्रत्ययनिमित्तं हि परत्वमपरत्वम्। तच्च द्विविधं—दिक्कृतं कालकृतं च। तत्र दिग्विशेषप्रत्यायकं दिक्कृतं, वयोभेदप्रत्यायकं कालकृतम्। एकस्यां दिशि प्राच्यां वा प्रतीच्यां वाऽवस्थितयोः पिण्डयोरेकस्य द्रष्टुः संयुक्तेन भूप्रदेशेन सहापरस्य भूप्रदेशस्य संयोगस्तेनापि सममपरस्येति संयुक्तसंयोगानां बहुत्वे सत्यल्पसंयुक्तसंयोगवन्तं पिण्डं सन्निकृष्टमवधिं कृत्वैतस्मात्पिण्डाद् विप्रकृष्टोऽयमिति संयुक्तसंयोगभूयस्त्ववति भविष्यतः परत्वस्याधारे पिण्डे विप्रकृष्टा बुद्धिरुदेति। ततो निमित्तकारणभूतां तामपेक्ष्य परेण संयुक्तसंयोगभूयस्त्ववता दिक्प्रदेशेन संयोगादसमवायिकारणाद् विप्रकृष्टे पिण्डे समवायिकारणभूते समवायेन परत्वस्योत्पत्तिः। द्रष्टृपुरुषस्य स्वशरीरापेक्षया संयुक्तसंयोगभूयस्त्ववन्तं विप्रकृष्टं चावधिं कृत्वेतरस्मिन् संयुक्तसंयोगाल्पीयस्त्ववति पिण्डे सन्निकृष्टा बुद्धिरुदेति। तां च सन्निकृष्टबुद्धिं निमित्तीकृत्यापरेण सयुक्तसंयोगाल्पीयस्त्ववता दिक्प्रदेशेन सह संयोगादसमवायिकारणात्सन्निकृष्टे पिण्डे समवायिकारणभूते समवायेनापरत्वस्योत्पत्तिः। एकदिगवस्थितयोर्भिन्नदिगवस्थितयोर्वा वर्तमानकालयोर्युवस्थविरपिण्डयोः कालविप्रकर्षलिङ्गानां रूढश्मश्रुकार्कश्यवलिपलिता-

दीनां सांनिध्ये सत्येकस्य द्रष्टु रूढश्मश्रुकार्कश्याद्यभावानुमिताल्पोत्पत्तिकालकं युवानमवधिं कृत्वा रूढश्मश्रुवलिपलितादिमति स्थविरे विप्रकृष्टा बुद्धिरुत्पद्यते । तां बुद्धिमपेक्ष्य परेणादित्यपरिस्पन्दभूयस्त्ववता कालप्रदेशेन संयोगादसमवायिकारणात् तस्मिन्नेव स्थविरे समवायेन परत्वस्योत्पत्तिः। स्थविरं चावधिं कृत्वा यूनि सन्निकृष्टा बुद्धिरुत्पद्यते । तां बुद्धिमपेक्ष्यापरेणादित्यपरिस्पन्दाल्पीयस्त्ववता कालप्रदेशेन संयोगादसमवायिकारणात्समवायिकारणभूते यूनि तस्मिन् समवायेनापरत्वस्योत्पत्तिर्भवति । नाशस्त्वपेक्षाबुद्धिनाशादिति भावः ।

**तत्र** पूर्वापरदिगवस्थितयोः पिण्डयोः परत्वापरत्वे नोत्पद्येते, तदर्थमेकदिक्काभ्यामित्युक्तम् । एवं द्वयोरेकस्मिन् वाऽविद्यमाने पिण्डे परत्वापरत्वे नोद्भवतः, तदर्थमेककालाभ्यामित्युक्तमिति विवेकः ॥ २१ ॥

**नन्वेकदिक्कालाभ्यां** सन्निकृष्टविप्रकृष्टपिण्डाभ्यामुत्पद्यतां समवायेन परत्वमपरत्वं, "परमिदम्, अपरमिदम्" इति पिण्डगोचरव्यवहारे किमायातं? तत्राह—

**"कारणपरत्वात्कारणापरत्वाच्च ॥ २२ ॥**

परमपरं चेत्यनुवर्तते । कारणपरत्वात्=विप्रकृष्टबुद्धिमपेक्ष्य जायमानात्पिण्डरूपकारणगतात्परत्वात्परं, कारणापरत्वाच्च=सन्निकृष्टबुद्धिमपेक्ष्य जायमानात्पिण्डरूपकारणगतादपरत्वाच्चापरमिति च व्यवहारो भवतीत्यर्थः ॥२२॥

**ननु** यथा सन्निकृष्टविप्रकृष्टपिण्डयोः परत्वापरत्वे, तथा परत्वापरत्वयोरपि परत्वापरत्वे किं न स्यातां? तत्राह—

**"परत्वापरत्वयोः परत्वापरत्वाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः ॥ २३ ॥**

परत्वापरत्वयोः=परत्वेऽपरत्वे च परत्वापरत्वाभावः=परत्वाभावोऽपरत्वाभावश्चाणुत्वमहत्त्वाभ्याम्=अणुत्वमहत्त्वाभाववद्भ्यामणुत्वमहत्त्वाभ्यां व्याख्यातः=कथितो वेदितव्य इत्यर्थः ।

**यथाऽ**णुत्वमहत्त्वयोरणुत्वमहत्त्वे न भवतः, तथा परत्वापरत्वयोः परत्वापरत्वे न स्त इति भावः ॥ २३ ॥

**ननु** विस्तरेणैतद्व्याख्येयं येन सम्यगधिगच्छेम? तत्राह—

**"कर्मभिः कर्माणि गुणैर्गुणाः ॥ २४ ॥**

व्याख्यातमिति विपरिणम्यानुवर्तते। तदेतत् **"कर्मभिः कर्माणि गुणैश्च गुणाः व्याख्याताः"** (वै.—अ. १—आ. ७—सू. १६) **"अणुत्वमहत्त्वाभ्यां कर्मगुणाश्च"** (वै.—अ. ७—आ. १—सू. १७), इत्यत्र विस्तरेण व्याख्यातमित्यर्थ. ॥ २४ ॥

**ननु** कोऽयं समवायो नाम येन परत्वापरत्वे पिण्डयोरुत्पद्येते? तत्राह—

**"इहेदमिति यतः कार्य्यकारणयोः, स समवायः ॥२५॥**

कार्य्यकारणयोः=अकार्य्यकारणयोरित्यपि द्रष्टव्यम्, अवयवावयविनोर्जातिव्यक्त्योर्गुणगुणिनोः क्रियाक्रियावतोर्नित्यद्रव्यविशेषयोश्चायुतसिद्धयोरिहेदमिति=तन्तुषु पटः, पटे पटत्वं, घटे रूपम्, इत्येवं प्रकारकः प्रत्ययो यतः=यन्निमित्तको भवति, स समवायः=समवायपदार्थः=समवायाख्यः सम्बन्ध इत्यर्थ.।

द्रव्यगुणकर्मसामान्यविशेषाणां कार्य्यकारणभूतानामकार्य्यकारणभूतानां वाऽयुतसिद्धानामाधार्य्याधारभावेनावस्थितानामिहेदमिति बुद्धिर्यतो भवति, यतश्चासर्वगतानामधिगतान्यत्वानामपृथगभावः=अस्वातन्त्र्यमिति यावत्स समवाय इति भावः ॥ २५ ॥

**परस्परोपसंश्लेषो भिन्नानां यत्कृतोभवेत्।**
**समवायः स विज्ञेयः स्वातन्त्र्यप्रतिरोधकः ॥ १ ॥**

**ननु** समवायो न पदार्थान्तरम्, अपि च द्रव्यगुणयोरेवान्यतरः कश्चित्, तत्राह—

**"द्रव्यत्वगुणत्वप्रतिषेधो भावेन व्याख्यातः ॥ २६ ॥**

समवाये इति सप्तम्यन्तेन विपरिणम्यानुवर्तते। समवाये द्रव्यत्वगुणत्वप्रतिषेध=अप्रसक्तत्वात्कर्मत्वाप्रतिषेधः, द्रव्यत्वगुणत्वयोरभावो भावेन=सत्तया व्याख्यातः=उपपादितो वेदितव्य इत्यर्थ।

**यथा** हि सत्ता द्रव्यादिबुद्धितो विलक्षणबुद्धिहेतुत्वाद् द्रव्यादितोऽर्थान्तरं, **किंबहुना**—तत्र द्रव्यत्वगुणत्वकर्मत्वानामभावः, तथैव समवायोऽपि द्रव्यादितोऽर्थान्तरं, न तदन्यतरः कश्चित् । विलक्षणबुद्धिहेतुत्वादिति भावः ॥ २६ ॥

**ननु** समवाये किं द्रव्यत्वगुणत्वयोः प्रतिषेधमात्रं भावेन व्याख्यायते ? तत्राह—

**"तत्त्वं च ॥ २७ ॥**

भावेन व्याख्यातमिति विपरिम्यानुवर्तते । तत्त्वञ्च=द्रव्यत्वादिप्रतिषेधवदेकत्वं नित्यत्वं चापि तत्र भावेन व्याख्यातं द्रष्टव्यमित्यर्थः ।

**यथा** हि सदिति लिङ्गाविशेषाद्विशेषलिङ्गाभावाच्चैकोऽकारणत्वान्नित्यश्च भावः, तथैव "इहेदमिति लिङ्गाविशेषाद्विशेषलिङ्गाभावाच्चैकोऽकारणत्वाद् नित्यश्च समवाय इति भावः ।

**इदमत्र बोध्यम्**—यद्यप्येकः समवायः, तथापि प्रतियोगिभेदाद् भिद्यते, तेन स्पर्शप्रतियोगिकसमवायसत्त्वेऽपि रूपप्रतियोगिकसमवायाभावान्न वायौ रूपवत्ताबुद्धिप्रसङ्ग इति ।

**तत्रा**तीन्द्रियत्वादिहबुद्ध्यनुमेयः समवाय इति वैशेषिकाः । इन्द्रियसम्बद्धविशेषणताप्रत्यासत्त्या प्रत्यक्षोऽयमिति नैयायिका इति विवेकः ॥२७॥

**संख्यादयो गुणाः पञ्च समवायेन संयुताः ।**
**शब्दार्थयोश्च सम्बन्धो द्वितीयेऽस्मिन् परीक्षितः ॥ १ ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृतायां वैशेषिकसूत्रवैदिकवृत्तौ सप्तमाध्यायस्य द्वितीयमाह्निकम् ।

समाप्तश्चायं, गुणसमवायाध्यायः सप्तमः ॥ ७ ॥

# अथाष्टमोऽध्यायः ।

## आद्यमाह्निकम् ।

परत्वापरत्वे परीक्षिते, क्रमप्राप्ता बुद्धिरिदानी परीक्षणीया, ताश्च प्रत्यक्षादिभेदभिन्ना बह्वयः, तत्रादौ तद्भेदं प्रत्यक्षं तावत्परीक्षयन्नाह—

**"द्रव्येषु ज्ञानं व्याख्यातम् ॥ १ ॥**

द्रव्येषु=विपयसप्तमीयं, गुणकर्मसामान्यानां द्रव्यप्रत्यक्षाधीनप्रत्यक्षत्वात्तथोक्तिः, पृथिव्यादिद्रव्येषु ज्ञानं=प्रत्यक्षज्ञानं व्याख्यातं=**"महत्यनेकद्रव्यवत्त्वाद्रूपाच्चोपलब्धिः"** (४।१।६) इत्यनेन व्याख्यातमित्यर्थः ।

द्रव्यगुणकर्मसामान्येपु हि प्रत्यक्षमुत्पद्यते, न विशेषसमवाययोः, तयोरतीन्द्रियत्वाभ्युपगमात्। गुणकर्मसामान्यानि च द्रव्यप्रत्यक्षाधीनप्रत्यक्षाणि, न स्वतः, तदाश्रितत्वात्। अत एव **"द्रव्यगुणकर्मसामान्येषु"** इति वक्तव्ये "द्रव्येपु" इत्युक्तम् । तेन द्रव्यादिषु प्रत्यक्षज्ञानं **"महत्यनेकद्रव्यवत्त्वाद्"** इत्यादिना चतुर्थाध्याये व्याख्यातमिति भावः ॥ १ ॥

**ननु** पृथिव्यादिषु द्रव्येषु कस्य द्रव्यस्य प्रत्यक्षं न भवति? तत्राह—

**"तत्रात्मा मनश्चाप्रत्यक्षे ॥ २ ॥**

वाय्वाकाशे, कालाशे, मूलप्रकृतिश्चेति चार्थः । परमात्मा प्रत्यगात्मा चात्मपदार्थः। तत्र=पृथिव्यादिद्रव्येष्वात्मा मनश्च=आत्ममनसी चाप्रत्यक्षे=प्रत्यक्षे न भवत इत्यर्थः ।

**वाय्वाकाशकालदिशां** मूलप्रकृतेर्जीवात्मपरमात्मनोर्मनसश्च प्रत्यक्षं न भवतीति भावः ॥ २ ॥

**ननु** कथमेतत्प्रत्यक्षं ज्ञानमुत्पद्यते? तत्राह—

**"ज्ञाननिर्देशे ज्ञाननिष्पत्तिविधिरुक्तः ॥ ३ ॥**

ज्ञाननिर्देशे=ज्ञानस्यात्मलिङ्गतया निर्देशो यत्र कृतस्तस्मिन्=तृतीयाध्याये ज्ञाननिष्पत्तिविधिः=प्रत्यक्षज्ञानोत्पत्तिप्रकारः उक्तः=**"आत्मेन्द्रियार्थसन्निकर्षाद्"** इत्यादिना कथितः इत्यर्थः ।

आत्मनो मनसा, मनसश्चेन्द्रियैः, इन्द्रियाणा चार्थैः, संयोगात् प्रत्यक्षं ज्ञानमुत्पद्यते इति भावः।

तत्राक्षमक्षम्=इन्द्रियमिन्द्रियं प्रतीत्य=प्राप्य यज्ज्ञानमुत्पद्यते, तत्प्रत्यक्षम्। प्रतिगतमक्षं प्रत्यक्षमिति तद्व्युत्पत्तेः। **"कुगतिप्रादयः"** (अष्टाध्या० २।२।१८) इति प्रादिसमासः। अक्षजं ज्ञान प्रत्यक्षमिति फलितम्। न च ज्ञानमात्रस्य मनोरूपेन्द्रियजन्यत्वादतिव्याप्तिः। इन्द्रियत्वेनासाधारणरूपणेन्द्रियाणां यत्र ज्ञाने करणत्वं, तत्प्रत्यक्षमिति विवक्षितत्वात्। मनस्तु सुखादिज्ञानादन्यत्र सर्वत्र मनस्त्वेन हेतुः। ईश्वरप्रत्यक्षं च न लक्ष्यम्। शास्त्रस्य मनुष्याधिकारत्वेन तत्प्रत्यक्षस्यैवात्र लक्ष्यत्वात्। अथवा **"इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं, ज्ञानाकरणकं वा ज्ञानं, प्रत्यक्षम्।** तच्च द्विविधं—निर्विकल्पक सविकल्पकं च। तत्र **निष्प्रकारकं ज्ञानं=विशेषणविशेष्यसम्बन्धानवगाहि ज्ञानं=निर्विकल्पकम्। किमुक्तं?** यज्ज्ञानं 'घटघटत्वे' इति विशकलिततया केवलविषयत्वेन विषयीकरोति, न च "इद विशेष्यम्, इदं विशेषणम्, अयं संसर्गः" इति तत्तद्धर्मप्रकारेण विशेष्यत्वादिना, तन्निर्विकल्पकम्। **किं बहुना** चक्षुःसंयोगाद्यनन्तरं 'घटः' इत्याकारकं घटत्वादिविशिष्टं ज्ञानं न सम्भवति। पूर्व विशेषणस्य घटत्वादेर्ज्ञानाभावात्। विशिष्टबुद्धौ च विशेषणज्ञानस्य कारणत्वात्। अतः प्रथमं घटघटत्वयोर्वैशिष्ट्यानवगाहि यज्ज्ञानं जायते, तदेव निर्विकल्पकम्। ससर्गारोपो विकल्पः, तस्मान्निष्क्रान्तं निर्विकल्पकमिति तद्व्युत्पत्तेः। एतच्चातीन्द्रियं, न सविकल्पकवदनुव्यवसायवेद्यम्। अत एव न प्रमा, नापि भ्रमः। **सप्रकारकं ज्ञानं=नामजात्यादिविशेषणविशेष्यसम्बन्धावगाहिज्ञानं=सविकल्पकम्।** यथा—डित्थोऽयं मनुष्योऽयं श्यामोऽयमिति। तच्चैतत्प्रत्यक्षं=घ्राणजं, रासनं, चाक्षुष, स्पार्शनं, श्रौत्रं, मानस चेति षड्विधम्। तस्य षड्विधत्वात्तत्कारणमिन्द्रियसन्निकर्षोऽपि षड्विधः=संयोगः, सयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणविशेष्यभावश्च। **तत्र** द्रव्यप्रत्यक्षे संयोगः, द्रव्यसमवेतप्रत्यक्षे सयुक्तसमवायः, द्रव्यसमवेतसमवेतप्रत्यक्षे संयुक्तसमवेतसमवायः,

शब्दप्रत्यक्षे समवायः, शब्दसमवेतप्रत्यक्षे समवेतसमवायः, अभावप्रत्यक्षे विशेषणविशेष्यभावः। किमुक्तं? गन्धस्य घ्राणजप्रत्यक्षे घ्राणसंयुक्तसमवायः सन्निकर्षः। घ्राणसंयुक्ते द्रव्ये गन्धस्य समवायात्। गन्धसमवेतस्य गन्धत्वादेर्घ्राणजप्रत्यक्षे घ्राणसंयुक्तसमवेतसमवायः। घ्राणसंयुक्तद्रव्यसमवेते गन्धे गन्धत्वादेः समवायात्। एवं रसस्य रासनप्रत्यक्षे रसनासंयुक्तसमवायः सन्निकर्षः। रससमवेतस्य रासनप्रत्यक्षे रसनासंयुक्तसमेवतसमवायः। घटपटादिद्रव्यस्य चाक्षुपप्रत्यक्षे संयोगः। तत्समवेतरूपादिचाक्षुपप्रत्यक्षे संयुक्तसमवाय.। तत्समवेतरूपत्वादिचाक्षुपप्रत्यक्षे संयुक्तसमवेतसमवायः। एवं तस्य स्पार्शनप्रत्यक्षे संयोगः। तत्समवेतस्य स्पर्शादेः स्पार्शनप्रत्यक्षे संयुक्तसमवायः। तत्समवेतस्पर्शत्वादेः संयुक्तसमवेतसमवायः। शब्दस्य श्रावणप्रत्यक्षे श्रोत्रावच्छिन्नसमवायः। कर्णविवरवर्त्याकाशस्य श्रोत्रत्वात्। शब्दस्याकाशगुणत्वात्। गुणगुणिनोश्च समवायात्। शब्दसमवेतस्य श्रावणप्रत्यक्षे श्रोत्रावच्छिन्नसमवेतसमवायः। केवलात्मनोऽप्रत्यक्षत्वाद्विशिष्टवर्तिज्ञानेच्छासुखदुःखादेर्मानसप्रत्यक्षे मनःसंयुक्तसमवायः। तत्समवेतज्ञानत्वादेर्मानसप्रत्यक्षे मनःसमवेतसमवायः। आत्मनोऽपि मानसं प्रत्यक्षं भवतीति नव्याः। तत्र च मनःसंयोगः कारणमित्याहुः॥ अभावप्रत्यक्षे च न केवलमिन्द्रियं करणम्, अपि च "यद्यत्र घट· स्यात्, तदा भूतलमिवोपलभ्येत, न चोपलभ्यते, अतो नास्तीति तर्कितप्रतियोगिसत्त्वविरोध्यनुपलब्ध्या सहकृतम्। अतो "घटाभाववद्भूतलम्" इत्यादौ भूतले घटाद्यभावस्य प्रत्यक्षे संयुक्तविशेषणता सन्निकर्षः। इन्द्रियसंयुक्ते भूतले विशेष्ये घटाद्यभावस्य विशेषणत्वात्। "भूतले घटो नास्ति" इत्यादौ च भूतले घटाद्यभावस्य प्रत्यक्षे संयुक्तविशेष्यता सन्निकर्षः। इन्द्रियसयुक्ते भूतले विशेषणे घटाद्यभावस्य विशेष्यत्वेन वर्तमानत्वात्। एवं सङ्ख्यादौ रूपाद्यभावस्य प्रत्यक्षे संयुक्तसमवेतविशेषणता सन्निकर्षः। सङ्ख्यात्वादौ रूपाद्यभावस्य प्रत्यक्षे संयुक्तसमवेतसमवेतविशेषणता, शब्दाभावस्य प्रत्यक्षे केवलश्रोत्रावच्छिन्नविशेषणता, घटाभावादौ वर्तमानस्य पटाभावादेः प्रत्यक्षे च संयुक्तविशेषणविशेषणता सन्निकर्षः। संसर्गाभावप्रत्यक्षे प्रतियोगिनो

योग्यता, अन्योऽन्याभावप्रत्यक्षे चाधिकरणस्यानुयोगिनो योग्यता विवक्षिता। तेनायोग्यस्य गुरुत्वादेः संसर्गाभावः, वायौ चोदकान्योऽन्याभावो न केनचित्प्रत्यक्षः। वायावुद्भूतरूपाभावः, पाषाणे सौरभाभावः, गुडे तिक्ताभावः वह्नावनुष्णत्वाभावः, श्रोत्रे शब्दाभावः, जीवात्मनि सुखाद्यभावस्तु प्रतियोगिग्राहकैस्तत्तदिन्द्रियैः प्रत्यक्षः । सर्वं चैतत्प्रत्यक्षं लौकिकसन्निकर्षजन्यत्वाल्लौकिकं बोध्यम्। अलौकिकं त्वग्रे वक्ष्यति। सर्वत्र चैतस्मिन् षड्विधे प्रत्यक्षे महत्त्वं नियमेन कारणम्, अन्यथा प्रत्यक्षानुत्पत्तेः। तत्र द्रव्यप्रत्यक्षे समवायसम्बन्धेन, द्रव्यसमवेतानां गुणकर्मसामान्यानां प्रत्यक्षे स्वाश्रयसमवायसम्बन्धेन, द्रव्यसमवेतसमवेतानां गुणत्वकर्मत्वादीनां प्रत्यक्षे स्वाश्रयसमवेतसमवायसम्बन्धेन कारणम् । आलोकसंयोगस्तु केवलचाक्षुषप्रत्यक्षे कारणं, न प्रत्यक्षान्तरे। तेन विनापि तदुत्पत्तेः । उद्भूतरूपं तु चाक्षुषे स्पार्शने च प्रत्यक्षे समानं कारणम् । अत्रेन्द्रियाणि प्रत्यक्षं प्रमाणम्। इन्द्रियार्थसन्निकर्षो व्यापारः। तज्जन्यं ज्ञानं प्रमितिः। **अथवा** इन्द्रियार्थसन्निकर्षाद्यज्ज्ञानमुत्पद्यते तत्प्रत्यक्षं प्रमाणम्। तत्र गुणदोषमाध्यस्थ्यदर्शनं प्रमितिः। प्रमेयास्तु द्रव्यादयः पदार्था इति विवेकः ॥ ३ ॥

**ननु** ज्ञाननिर्देशे सामान्यतो ज्ञाननिष्पत्तिविधिरुक्तो न विशेषतः, सम्प्रति विशेषतो वक्तव्यः? तत्राह—

**"गुणकर्मसु सन्निकृष्टेषु ज्ञाननिष्पत्तेर्द्रव्यं कारणम् ॥४॥**

सन्निकृष्टेषु=इन्द्रियसन्निकर्षं प्राप्तेषु गुणकर्मसु=गुणेषु कर्मसु चार्थेषु ज्ञाननिष्पत्तेः=या 'रूपमिदम्, उत्क्षेपणमिदम्' इत्यादिप्रत्यक्षज्ञानस्य निष्पत्तिः=उत्पत्तिर्भवति, तस्याः कारणं=सन्निकर्षघटकत्वाद्धेतुर्द्रव्यं=तदाश्रयभूतं द्रव्यं वेदितव्यमित्यर्थः।

**इन्द्रियार्थसन्निकर्षजन्यं** ज्ञानं हि प्रत्यक्षम्। न च तदन्तरेण सन्निकर्षं गुणकर्मसूत्पत्तुमर्हति। सर्वत्र तत्प्रसक्तेरवर्जनात्। न च द्रव्याश्रितैस्तैरिन्द्रियाणां साक्षात्कश्चित्सन्निकर्षः सम्भवति। मध्ये द्रव्येण व्यवधानात्। अतस्तद्घटकः संयुक्तसमवायाख्यः सन्निकर्षो वक्तव्यः। इन्द्रियसंयुक्ते द्रव्ये गुणकर्मणा समवायात्। स च द्रव्यघटितत्वाद् द्रव्यकारणक एव सम्पद्यते,

नातत्कारणकः। तेन विना तदनुत्पत्तेः। तस्मादिन्द्रियसन्निकृष्टेषु तेषु ज्ञाननिष्पत्तेः कारणं द्रव्यमिति भावः ।

**एतेन** सत्तादिसामान्यविशेषेषु ज्ञाननिष्पत्तेः कारणं द्रव्यमित्यपि व्याख्यातम्। **तत्र** द्रव्यगते सत्तासामान्ये द्रव्यत्वपृथिवीत्वादिसामान्यविशेषे च संयुक्तसमवायात्प्रत्यक्षं ज्ञानं निष्पद्यते । गुणकर्मगे तस्मिन् गुणत्वकर्मत्वादिसामान्यविशेषे च संयुक्तसमवेतसमवायात् । शब्दगे सत्तासामान्ये शब्दत्वकत्वगत्वादिसामान्यविशेषे च समवेतसमवायादिति विवेकः॥ ४ ॥

**ननु** सत्तादिसामान्यविशेषेषु किम्प्रकारकं ज्ञानमुत्पद्यते? तत्राह—

**"सामान्यविशेषेषु सामान्यविशेषाभावात्तत एव ज्ञानम् ॥ ५ ॥**

सामान्यविशेषेषु=सामान्यं सत्ता, तद्व्याप्यानि द्रव्यत्वगुणत्वकर्मत्वानि विशेषाः, पृथिवीत्वरूपत्वोत्क्षेपणत्वादयश्च तद्विशेषाः, तेषु सामान्यविशेषेषु सामान्यविशेषाभावात्=सामान्यविशेषाभ्युपगमाभावाद् ज्ञानं=तद्गोचरं सार्वेन्द्रियं यज्ज्ञानं निष्पद्यते, तत्तत एव=सामान्यविशेषत एव=स्वरूपत एव निष्पद्यते, न किञ्चित्प्रकारकमित्यर्थः ।

**जात्यखण्डोपाधिव्यतिरिक्तपदार्थज्ञानस्यैव** किञ्चिद्धर्मप्रकारकत्वनियमादिति भावः ॥ ५ ॥

**ननु** द्रव्यगुणकर्मसु तर्हि किमपेक्षं ज्ञानमुत्पद्यते? तत्राह—

**"सामान्यविशेषापेक्षं द्रव्यगुणकर्मसु ॥ ६ ॥**

ज्ञानमित्यनुवर्तते । द्रव्यगुणकर्मसु=द्रव्ये गुणे कर्मणि च सामन्यविशेषापेक्षं=द्रव्यत्वगुणत्वकर्मत्वापेक्षं ज्ञानं=द्रव्यमिदं, गुणोऽयं, कर्मेदमिति विशिष्टज्ञानं निष्पद्यते, इत्यर्थः ।

**विशिष्टज्ञानं** हि सर्वमात्मोत्पत्तये विशेष्यवद् विशेषणं विशेषणबुद्धिं च नियमेनापेक्षते, तस्य विशकलितविशेषणविशेष्योभयगोचरनिर्विकल्पकज्ञानपूर्वकत्वावश्यम्भावात्। विशिष्टं च द्रव्यमिदं, गुणोऽयं, कर्मेदमिति द्रव्यादिगोचरं ज्ञानम्। प्रकारो विशेषणमिति त्वनर्थान्तरम्। अतस्तेनापि किञ्चित्प्रकारापेक्षेणावश्यं भवितव्यम्। प्रकारश्चेह द्रव्यत्वगुणकर्मत्वलक्षणसामान्य-

विशेष एव विद्यते, न कश्चिदपरः । तस्मादावश्यकी तस्य तदपेक्षेति भावः॥६॥

**ननु** शुक्लं वस्त्रमित्यादिद्रव्यगोचरं ज्ञानं न द्रव्यत्वप्रकारमपेक्षते, किन्तु शुक्लत्वम्, अतः कथमविशेषेणोच्यते—"सामान्यविशेषापेक्षं द्रव्यगुणकर्मसु ज्ञानम्" इति? तत्राह—

**"द्रव्ये द्रव्यगुणकर्मापेक्षम् ॥ ७ ॥**

ज्ञानमित्यनुवर्तते । द्रव्ये=पृथिव्यादिद्रव्ये द्रव्यगुणकर्मापेक्षं=द्रव्यापेक्षं, गुणापेक्षं, कर्मापेक्षमपि ज्ञानं='दण्डी, शुक्लश्चलति' इत्यादिकं ज्ञानमुत्पद्यते इत्यर्थः ।

**न द्रव्ये** केवलं सामान्यविशेषप्रकारापेक्षम्, अपि च द्रव्यगुणकर्म-प्रकारापेक्षमपि ज्ञान निष्पद्यते, अतो न कश्चिद्दोष इति भाव ॥ ७ ॥

**ननु** किं द्रव्यवद्गुणकर्मसु गुणकर्मापेक्षं ज्ञानं न भवति? तत्राह—

**"गुणकर्मसु गुणकर्माभावाद्गुणकर्मापेक्षं न विद्यते ॥८॥**

ज्ञानमित्यनुवर्तते । गुणकर्मसु=गुणेषु कर्मसु च गुणकर्माभावात्=यथा-सङ्ख्यमन्वयः, गुणाभावात्कर्माभावाच्च गुणकर्मापेक्षं=गुणप्रकारकं, कर्म-प्रकारकं च ज्ञानं न विद्यते=न भवतीत्यर्थः ॥ ८ ॥

**ननु** विशेषणं-तद्बुद्धिकारणकं किञ्चिद्विशिष्टज्ञानमुदाहर्तव्यं? तत्राह—

**"समवायिनः श्वैत्याच्छ्वैत्यबुद्धेश्च श्वेते बुद्धिः, ते एते कार्य्यकारणभूते ॥ ९ ॥**

समवायिनः श्वैत्यात्=पञ्चमीयं हेतौ, श्वैत्यसमवायिनो द्रव्यस्य यच्छ्वैत्यं गुणस्तस्मात्, श्वैत्यबुद्धेश्च=उक्तार्थेयं पञ्चमी, तद्गोचरश्वैत्यबुद्धेश्च श्वेते=श्वैत्यवति द्रव्ये शङ्खादौ बुद्धिः=श्वेतोऽयमिति विशिष्टज्ञानमुत्पद्यते, तत्र ते=पूर्वोक्ते एते=श्वैत्यबुद्धिः श्वेतबुद्धिश्चेति बुद्धी द्वे कार्य्यकारणभूते=पूर्वा विशेषणबुद्धिः कारणं, पश्चिमा विशिष्टबुद्धिश्च कार्य्यमिति परस्परं कार्य्यकारणभूते वेदितव्ये इत्यर्थः ।

**श्वैत्यं** हि श्वेते द्रव्ये विशेषणं=प्रकार इति यावत् । न हि तज्ज्ञा-नाभावे श्वेतोऽयमिति तत्प्रकारकं विशिष्टज्ञानं सम्भवति । जवाकुसुमादिषु तदनुपलब्धेः । तस्मात्तत्र श्वैत्यं तद्गोचरं च ज्ञानं कारणं, तत्कारणकं च श्वेतोऽयमिति विशिष्टज्ञानमिति भाव ॥ ९ ॥

**ननु** श्वैत्यबुद्धेः, श्वेतबुद्धेश्च क्रमेण भावाच्चेत्कार्य्यकारणभावः, तदा क्रमेण भवन्तीनां घटपटादिबुद्धीनामपि कार्य्यकारणभावः स्यात्? तत्राह—

**"द्रव्येष्वनितरेतरकारणाः ॥ १० ॥**

बुद्धय इति विपरिणम्यानुवर्तते। द्रव्येषु=घटपटादिद्रव्येषु बुद्धयः=याः इमा "घटोऽयं, पटोऽयम्" इत्यादिबुद्धयः, ताः अनितरेतरकारणाः=नेतरा बुद्धिरितरस्याः बुद्धेः कारणं विद्यते यासु, तास्तथा=परस्परकार्य्यकारणभाववर्जिताः भवन्तीत्यर्थः।

**तत्र** हि द्रव्यबुद्धिरितरस्यां द्रव्यबुद्धौ कारणं भवति, यत्रैकं द्रव्यमपरेण द्रव्येण विशेष्यते। न चेह घटः पटेन, पटो वा मठेन विशेष्यते। तस्मादत्र घटोऽयं, पटोऽयं, मठोऽयं, स्तम्भोऽयमिति क्रमेण भवन्त्योऽपि द्रव्यगोचराः बुद्धयो नेतरेतरकारणाः भवन्तीति भावः ॥ १० ॥

**ननु** क्रमेण भवन्तीषु घटपटादिबुद्धिषु चेदितरा बुद्धिर्नेतरस्याः बुद्धेः कारणं, तदा कुतोऽयं तासां क्रमः? तत्राह—

**"कारणायौगपद्यात्कारणक्रमाच्च घटपटादिबुद्धीनां क्रमो न हेतुफलभावात् ॥ ११ ॥**

कारणायौगपद्यात्=बुद्धिकारणानामिन्द्रियार्थसन्निकर्षाणां युगपज्जायमानत्वाभावात्, कारणक्रमाच्च=बुद्धिकारणानां तेषां क्रमेण भावाद्वा घटपटादिबुद्धीनां=घटोऽय पटोऽयमित्यादिज्ञानानां क्रमः=पूर्वापरभावः, न हेतुफलभावात्=न मिथः कार्य्यकारणभावादित्यर्थः।

**योऽयं** घटपटादिबुद्धीनां क्रमो दृश्यते, नासौ तासां कार्य्यकारणभावाद् भवति, किन्तु बुद्धिकारणानामयौगपद्यात् क्रमेण वा भावादिति भावः ॥११॥

**द्रव्ये गुणे च क्रियायां सामान्ये चाक्षजा प्रमा,**
**घ्राणजादिप्रभेदेन षड्विधाऽस्मिन् परीक्षिता ॥ १ ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृतायां वैशेषिकसूत्रवैदिकवृत्ता-वष्टमाध्यायस्याद्यमाह्निकम्।

# अथाष्टमोऽध्यायः ।

## द्वितीयमाह्निकम् ।

सम्प्रति बुध्यपेक्षं ज्ञानमुदाहरति—

**"अयमेष त्वया कृतं भोजयैनमिति बुद्ध्यपेक्षम् ॥ १॥**

अयम्=आर्य्यमुनिरयम्, एषः=गुरुकुलाधिपतिरेषः, त्वया कृतं=भो आर्य्यकुलनन्दन भारतमानसहंस! अभूतपूर्वं तावद्देशात्मोद्धारार्थं स्वात्मार्पणलक्षणं कर्म त्वया कृतं, भोजयैनं=चिरादुपस्थितं वैदिकधर्मोपदेष्टारं खल्वतिथिदेवमेनं सुरेन्द्रपितृचरणं **देवदत्तशर्माणं** द्रुतं भोजय, इति= इत्यादिकं ज्ञानं बुध्यपेक्षं=ज्ञानप्रकारकं भवतीत्यर्थः ॥ १ ॥

**ननु** कस्मादेतत्तथा भवति? तत्राह—

**"दृष्टेषु भावाददृष्टेष्वभावात् ॥ २ ॥**

दृष्टेषु=ज्ञातेषु विषयेषु भावात्=सत्त्वात्, अदृष्टेषु=अज्ञातेषु चाभावात्= असत्त्वादित्यर्थः ।

इदमेतदोर्हि प्रत्यक्षेषु विषयेषु शक्तिः, युष्मदश्च स्वजन्यबोधाश्रयतया वक्तृतात्पर्य्यगोचरे विषयविशेषे । अतोऽयमेष इत्यादिकं ज्ञानं प्रत्यक्षेण- ज्ञातेष्वेव विषयेषु भवति, न जात्वज्ञातेषु । प्रत्यक्षविषयविषयत्वादेव च बुद्ध्यपेक्षमेतदिति भावः ॥ २ ॥

**ननु** "आत्मेन्द्रियार्थसन्निकर्षाद्" इत्यादिषु वैशेषिकाणामर्थपदेन किं ग्राह्यं? तत्राह—

**"अर्थ इति द्रव्यगुणकर्मसु ॥ ३ ॥**

अर्थ इति=वैशेषिकाणामस्माकं सर्वत्र 'अर्थः' इति पदं द्रव्यगुणकर्मसु= द्रव्ये, गुणे, कर्मणि च प्रयुक्तं वेदितव्यमित्यर्थः ।

समान्यविशेषसमवायास्तु त्रयोऽस्माकमुपार्थाः, द्रव्यगुणकर्माणि चार्थाः इति भावः ॥ ३ ॥

**ननु** किंप्रकृतीनि घ्राणादीनीन्द्रियाणि, येषामर्थेन सन्निकर्षाज्ज्ञानमुत्पद्यते? तत्र पीठमारचयन्नाह—

**"द्रव्येषु पञ्चात्मकत्वम् ॥ ४ ॥**

द्रव्येषु=शरीरादिकार्य्यद्रव्येषु पञ्चात्मकत्वम्=अणुसंयोगाप्रतिषेधात्पञ्च-भूतात्मकत्वं वेदितव्यमित्यर्थः।

यद्यप्येकभूतारब्धे कार्य्यद्रव्ये भूतान्तराणि नारम्भकाणि भवन्ति। **"प्रत्यक्षाप्रत्यक्षाणां संयोगस्याप्रत्यक्षत्वात्पञ्चात्मकं न विद्यते"** (४।२।२) **"न त्र्यात्मकम्"** (४।२।३) इति सूत्राभ्यां प्रतिषेधात्। तथापि निमित्तकारणानि सन्त्येव। तत्र तदणुसंयोगप्रतिषेधाभावात्। **"अणुसंयोगस्त्वप्रतिषिद्धः"** (४।२।४) इत्युक्तेः। अतो यावद्भूतसूक्ष्मारब्धं कार्य्यद्रव्यं, तत्सर्वं पञ्चभूतात्मकमिति भावः।

**तत्र** येन यदारब्धं, तत्र तस्य भूयस्त्वम्, इतरेषां च निमित्तमात्रत्वादल्पीयस्त्वमिति विवेकः॥ ४॥

**ननु** भवतु द्रव्येषु पञ्चात्मत्वम्, इन्द्रियप्रकृतौ किमायातं? तत्राह—

**"भूयस्त्वाद् गन्धवत्वाच्च पृथिवी गन्धज्ञाने प्रकृतिः॥५॥**

भूयस्त्वात्=अबादिभागापेक्षया पार्थिवभागस्य भूयस्त्वात्, गन्धवत्वाच्च=गन्धगुणाश्रयत्वाच्च पृथिवी=पृथिवी-द्रव्यं गन्धज्ञाने=गन्धस्य ज्ञानं=साक्षात्कारो नियमेन भवति यस्मात्, तस्मिन्=नियमेन गन्धस्य ग्राहके घ्राणेन्द्रिये प्रकृतिः=उपादानकारणं=समवायिकारणमित्यर्थः।

**यं** विशेषगुणं हि यदिन्द्रियं नियमेन गृह्णाति, तत् तत्समवायिद्रव्यप्रकृतिकं द्रव्यमिति निश्चेतव्यम्। इन्द्रियाणामात्मप्रकृतिगुणग्राहकत्वनियमात्। घ्राणेन्द्रियमपि पृथिवीविशेषगुणं गन्धं नियमेन गृह्णाति, तस्मात्तेनापि तत्समवायिद्रव्यप्रकृतिकेनावश्यं भवितव्यम्। यथा हि पृथिवी गन्धोपलब्धौ नियमेन हेतुः, तथैव घ्राणमिन्द्रियं गन्धोपलब्धौ नियमेन हेतुः। अतो भवति प्रतिपत्तिः "पृथिवी गन्धज्ञाने प्रकृतिः" इति भावः।

**तत्र** द्रव्याणां पञ्चात्मकत्वात्कथं पृथिवीमात्रं गन्धज्ञाने प्रकृतिरिति शङ्कानिरासायोक्तं "भूयस्त्वात्," इन्द्रियाणां स्वप्रकृतिविशेषगुणग्राहित्वनियम इति सूचनायोक्तं "गन्धवत्त्वात्" इति विवेकः॥ ५॥

अतिदिशति—

**"तथाऽऽपस्तेजो वायुश्च रसरूपस्पर्शज्ञानेऽविशेषात्॥६॥**

प्रकृतिरित्यनुवर्तते । तथा=यथा पृथिवी गन्धज्ञाने प्रकृतिः, तथाऽऽपस्तेजो वायुश्च=जलं ज्योतिरनिलश्च रसरूपस्पर्शज्ञाने=यथासङ्ख्यमन्वयः, रसज्ञाने, रूपज्ञाने, स्पर्शज्ञाने च प्रकृतिः । कुतः ? अविशेषात्=भूयस्त्वादिसमानत्वादित्यर्थः ।

**यथा** हि भूयस्त्वाद्गन्धवत्त्वाच्च पृथिवी गन्धज्ञाने प्रकृतिः, तथैव भूयस्त्वाद्रसादिमत्त्वाच्चापस्तेजो वायुश्च रसरूपस्पर्शज्ञाने=रसनचक्षुस्त्वगिन्द्रिये प्रकृतिरिति भावः ।

**तत्र** शब्दज्ञाने=श्रोत्रे प्रकृतिराकाशम् । तच्च परमार्थतो नाकाशाद्भिद्यते । कर्णशष्कुलीप्रदेशावच्छिन्नाकाशस्यैव श्रोत्रत्वात् । अतो न तत्पृथगुक्तमिति द्रष्टव्यम् ॥ ९ ॥

**ज्ञानप्रकारकं ज्ञानमिन्द्रियाणां च कारणम् ।**
**अर्थशब्दाभिधेयं च द्वितीयेऽस्मिन् निरूपितम् ॥ १ ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृताया वैशेषिकसूत्रवैदिकवृत्तावष्टमाध्यायस्य द्वितीयमाह्निकम् ॥

समाप्तश्चायं ज्ञानाध्यायोऽष्टमः ॥ ८ ॥



# अथ नवमोऽध्यायः ।

## आद्यमाह्निकम् ।

**ननु** किमेतत्पृथिव्यादिकं कार्य्यद्रव्यमुत्पत्तेः प्राक् सद्भवति, उतासत् ? तत्राह—

**"क्रियागुणव्यपदेशाभावात्प्रागसत् ॥ १ ॥**

प्राग्=उत्पत्तेः प्रागसत्=पृथिव्यादिकार्य्यद्रव्यमसद्भवति । कुतः ? क्रियागुणव्यपदेशाभावात्=क्रियया गुणेन च यो व्यपदेशः=व्यवहारः, तद्विषयत्वाभावादित्यर्थः ।

**यदा** हि कार्यमुत्पत्त्यनन्तरं सद्भवति, तदा क्रियागुणाभ्यां व्यपदिश्यते=भवति, चलति, तिष्ठति नीलो, रोहितः, शुक्ल इति । चेदुत्पत्तेः प्रागपि सद्भवेत्, तदाऽवश्यं क्रियावत्त्वेन, गुणवत्त्वेन च व्यपदिश्येत । न च क्रियया, गुणेन च तदानीं व्यपदिश्यते । ततो भवति प्रतिपत्तिः—उत्पत्तेः प्राक् कार्य्यजातमसदिति भावः ।

**इदमत्र बोध्यं**–यो हि वैशेषिकाणामसत्कार्य्यवादः, **किंबहुना** यतः असत्कार्य्यवादिनो वैशिषिका इति लौकिकी ख्यातिः, तस्येदमेव सूत्रं मूलम् । अत एव चासौ वादः समुत्तिष्ठति । नव्याश्चैतेनैव भ्रान्तिमापन्नाः सत्कार्य्यवादतोऽसत्कार्यवादे बहुविशेषं कल्पयन्तो वैदिकदर्शनानां मिथो विरोधमाहुः । परंतु नायं ततो विशिष्यते, संज्ञातो भेदेऽप्यर्थतो भेदाभावात् । उत्पत्तेः प्राक् कारणात्मना कार्य्यं सद्भवति यस्मिन् वादे, तं हि सत्कार्यवादम्, उत्पत्तेः प्राक् कार्य्यात्मना कार्य्यमसद्भवति यस्मिन् वादे, तच्चासत्कार्य्यवादमाचक्षते । कार्य्यात्मना कार्यस्यासत्त्वं, कारणात्मना च सत्त्वमुत्पत्तेः प्रागुभयत्रापि समानं विद्यते । न चेह भवति कश्चिद् विशेषः । संज्ञाभेदमात्रेण भवन् विशेषस्तु न किञ्चिद्धानिकरः । अतो व्यवहारवैलक्षण्येऽपि नास्ति वैदिकदर्शनानामत्र कश्चिद्विरोध इति ॥ १ ॥

**ननूत्पत्तेः** प्राक् चेदसत्कार्य्यं, तदा कारणव्यापारेण कथमुत्पद्येत, न हि सिकतास्वसत्तैलं कारणव्यापारेण कथञ्चिदुत्पद्यते, तत्राह—

**सदसत् ॥ २ ॥**

प्रागित्यनुवर्तते । प्राक् कारणात्मना सद्भवत्कार्य्यात्मना कार्य्यमसद्भवतीत्यर्थः ।

तदेव हि कारणव्यापारेण न कथञ्चिदुत्पद्यते, यत्केनापि रूपेणोत्पत्तेः पूर्वं सन्न भवेत् । यथा सिकतासु तैलम् । कार्य्यजातं तु प्रागुत्पत्तेः कारणात्मना सद्भवदेव कार्य्यात्मना भवत्यसत् । अतो न कश्चिद्दोष इति भावः ॥ २ ॥

ननु प्रागुत्पत्तेश्चेत्सत्कार्य्यं, तदा कारणव्यापारेण किं क्रियते ? तत्राह—

**"असतः क्रियागुणव्यपदेशाभावादर्थान्तरम् ॥ ३ ॥**

सदित्यनुवर्तते । क्रियागुणव्यपदेशाभावात्=उत्पत्तेः प्राक् क्रियागुणाभ्यां व्यपदेशस्य न विद्यते भावो यस्मिन्नसति, तस्मादसतः=कार्य्यात्मनाऽसद्भूतादर्थान्तरं=विलक्षणं सत्=कार्य्यात्मना कार्य्यं सत् कारणव्यापारेण विधीयते इत्यर्थः ।

कारणव्यापारो हि न किञ्चिदपूर्वं करोति । तत्र तत्सामर्थ्याभावात् । अन्यथा शशशृङ्गमपि कुर्यात् । अपि च केनचिद्रूपेण सद्भवत्कार्य्यं येन रूपेण सन्न भवति, तेन रूपेण तस्य सत्त्वं करोति । शक्यत्वात् । शक्यगोचरा च शक्तस्य शक्तिः । अतः कारणरूपेण सतोऽपि कार्य्यस्य कार्य्यरूपेणासत्त्वात्कारणव्यापारस्तेनैव रूपेण तस्य सत्त्वं करोति । तत्रैव तच्छक्तेः । तस्मान्नासौविफल इति भावः ॥ ३ ॥

ननु कारणव्यापारात्कार्य्यात्मना सद्भवत्कार्य्यं किं सर्वदा सद्भवति ? तत्राह—

**"सच्चासत् ॥ ४ ॥**

सच्च=कारणव्यापारात्कार्य्यात्मना सद्भवच्च कार्य्यमसत्=पुनर्मुद्गरादिप्रहारेणात्मनः प्रहाणादसद्भवतीत्यर्थः ।

यज्जन्यं तदनित्यमिति हि समव्याप्तो न्यायो, न जातु कुत्रचिद् व्यभिचरति । जन्यं च कार्य्यस्य कार्य्यं रूपम् । कारणव्यापारसाध्यत्वात् । अतो ध्रुवमस्य विनाशो न सर्वदाऽवस्थानमिति भावः ॥ ४ ॥

**नन्वसतो** भावो न भवति, सतश्चाभाव इत्यपि नियमोऽस्ति, तत्कथमुच्यते कारणव्यापारेणासत्सत् क्रियते, सच्चासत् ? तत्राह—

**"यच्चान्यदसदतस्तदसत् ॥ ५ ॥**

एवार्थश्चकारो भिन्नक्रमः । यदतः=असात्पूर्वोक्तादसतः कार्य्यादन्यत्=भिन्नं=विलक्षणमसत्=गगनारविन्दादिकम् तच्च=तदेवासत्=तादृशमसत्, यस्य कदापि कारणव्यापारेण न भाव इत्यर्थः ।

**सत्यमस्ति** तादृशमप्यसत्, यस्य सहस्रेणापि कारणव्यापारेण भावो न भवति, यथा गगनारविन्दशशशृंगवन्ध्यापुत्रादिकम् । सर्वदा सर्वरूपेणासत्त्वात् । कार्य्यं च न तादृशमसत् । अपि चैकेन रूपेण सद्भवद् रूपान्तरेणासत् । अतोऽस्य भावो न कारणव्यापारेण दुर्घटः, नापि सतस्तादृशोऽभाव इति भावः ॥ ५ ॥

**ननु** कारणव्यापारात्सद् भवत्कार्य्यं यदा मुद्गरादिप्रहारेण पुनरसद्भवति, तदा किमाकारकं तद्गोचरं प्रत्यक्षमुपजायते ? तत्राह—

**"असदिति भूतप्रत्यक्षाभावाद् भूतस्मृतेर्विरोधिप्रत्यक्षवत् ॥ ६ ॥**

चोऽनुवर्तते । भूतप्रत्यक्षाभावात्=**"अभूतं नास्तीत्यनर्थान्तरम्"** इति वक्ष्यमाणाद् भूतमस्तीत्यप्यनर्थान्तरम्, भूतस्य=कार्यात्मना सतः कार्य्यस्य प्रत्यक्षाभावात्=अनुपलम्भात्, भूतस्मृतेश्च=स्मृतिरितिज्ञानं विवक्षितं, तद्गोचरज्ञानाच्चासदिति=प्रत्यक्षाकारमितिपदमाह, न सदिदानीं तत्, किन्तु "असत्" इत्याकारकं तद्गोचरं तदा प्रत्यक्षं जायते । विरोधिप्रत्यक्षवत्=यथाऽसद्विरोधिनि सति सदित्याकारकं प्रत्यक्षमित्यर्थः ।

**तदा** हि प्रतियोगिज्ञानपूर्वकयोग्यानुपलम्भसहकृतादिन्द्रियादसति तस्मिन्नसदित्याकारकं प्रत्यक्षं जायते इति भावः ॥ ६ ॥

**ननु** प्रागुत्पत्तेरसति तस्मिन् किमाकारकं प्रत्यक्षं भवति ? तत्राह—

**"तथाऽभावे भावप्रत्यक्षत्वाच्च ॥ ७ ॥**

'असदिति' इत्यनुवर्तते । तथा=यथा भूतप्रत्यक्षाभावाद्भूतस्मृतेश्चोत्पत्तेः परतोऽसति कार्य्येऽसदित्याकारकं प्रत्यक्षं जायते, तथा भावप्रत्यक्षत्वाच्च=

भावानां=तदाश्रयभूतमृदादिपदार्थानां प्रत्यक्षत्वाच्च=उपलम्भाच्चाभावे=न भवति योगोऽत्र सम्प्रति यस्य, तस्मिन् प्रागुत्पत्तेरसति कार्य्येऽसदिति=नाद्यावधि सदत्र तत्, किन्त्वसदित्याकारकं प्रत्यक्षं भवतीत्यर्थः ।

तदाश्रयभूतकारणसामग्रीदर्शनादुत्पत्तेः प्रागसति तस्मिन्नसदित्याकारकं प्रत्यक्षं भवतीति भावः ॥ ७ ॥

अतिदिशति—

**"एतेनाघटोऽगौरधर्मश्च व्याख्यातः ॥ ८ ॥**

भावप्रत्यक्षत्वाच्चेत्यनुवर्तते । एतेन=भावप्रत्यक्षत्वादसति कार्य्येऽसदित्याकारकप्रत्यक्षव्याख्यानेन भावप्रत्यक्षत्वाच्च=आश्रयभूतभावोपलम्भाच्चाघटः=घटविलक्षणेतद्वैलक्षण्याश्रयभूते भावे पटेऽघट इत्याकारकः, गोविलक्षणेऽश्वेऽगौरित्याकारकः, वेदविहितं कर्म धर्मः, तद्विलक्षणे निषिद्धकर्मजातेऽधर्म इत्याकारकश्च व्याख्यातः=प्रत्यक्षप्रत्ययो व्याख्यातो वेदितव्य इत्यर्थः।

आश्रयप्रत्यक्षादीदृशः प्रत्ययाः भवन्तीति भावः ॥ ८ ॥

परिभाषासूत्रं पठति—

**"अभूतं नास्तीत्यनर्थान्तरम् ॥ ९ ॥**

अभूतं=यन्न भवति, तदभूतं, नास्ति=यन्न विद्यते, तन्नास्ति, इति=इत्येतद् द्वयमनर्थान्तरं=परस्परभिन्नार्थकं नेत्यर्थः ।

अभूतं नास्तीत्यनयोस्तुल्योऽर्थ इति भावः ॥ ९ ॥

ननु नास्ति घटो गेहे, नास्त्यत्र पट इत्यादिप्रत्यक्षस्य को विषयः ? तत्राह—

**"नास्ति घटो गेह इति सतो घटस्य गेहसंसर्गप्रतिषेधः ॥ १० ॥**

नास्ति घटो गेहे=सदने कलशो न विद्यते, नास्त्यत्र पट इति=इत्यादिप्रत्यक्षेण सतः=स्वरूपतः सतो घटस्य=घटादेर्गेहसंसर्गप्रतिषेधः=गेहेन सदनतलादिना यः संसर्गः संयोगस्तस्य प्रतिषेधः=निषेधो गोचरी क्रियत इत्यर्थः ।

नास्ति घटो गेहे, नास्त्यत्र पट इत्यादिप्रत्यक्षस्य सत एव घटादेर्गेहाद्यसंसर्गो विषय इति भावः ॥ १० ॥

परीक्षितं लौकिकं प्रत्यक्षम्, इदानीमलौकिकं तत्परीक्षमाण आह—

**"आत्मन्यात्ममनसोः संयोगविशेषादात्मप्रत्यक्षम्॥११॥**

आत्मनि=प्रत्यगात्मनि वर्तमानादात्ममनसोः=आत्मनो, मनसश्च संयोगविशेषात्=योगजो धर्मोऽत्र संयोगे विशेषः, तत्सहकृतात्संयोगादात्मप्रत्यक्षं—प्रत्यगात्मनः साक्षात्कारात्मक ज्ञानमुत्पद्यते इत्यर्थः ।

**यदा** हि योगी योगेन प्रक्षीणरजस्तमोमलावरणं चित्तं प्रत्यगात्मनि संयोजयति, तदा तस्य तद्गोचरं यथार्थं प्रत्यक्षमुपजायते इति भावः ।

**इदमिह बोध्यं**—यद्यप्यत्रात्मेति सामान्यशब्दः, तथापि स प्रत्यगात्मानमेवाह, न परमात्मानम्, तस्य **"यन्मनसा न मनुते"** इत्यादिश्रुतिविरोधेन मानससाक्षात्कारविषयत्वानभ्युपगमात् । न हि प्रत्यगात्मसंयुक्तेन मनसा प्रत्यगात्मान्तर्वर्ती स तदात्मभूतः परमात्मा साक्षात्कर्तुं पार्य्यते । किमस्ति प्रकृतितद्विकाराणामीदृशं सामर्थ्यं, यत्सहस्रसूर्य्यवद् जाज्वल्यमानमेनं महद्भयं संस्पृशेयुः, **किं बहुना** दूरतोऽपि दर्शयेयुः । स हि जगतां पतिरीश्वरो योगात्साक्षात्कृतेन प्रत्यगात्मनैव स्वेन साक्षात्क्रियते । तस्यैव तद्योग्यत्वात् । न चैतदर्थमन्यः कश्चिदुपायोऽप्यन्वेष्टव्यो भवति । योगेन प्रत्यगात्मसाक्षात्कारस्यैव तत्साक्षात्कारे परमोपायत्वात् । श्रुतिस्मृतयश्चात्रैव सर्वाः सुव्यवस्थिताः सन्ति । तस्मात्परमात्मसाक्षात्काराभिलाषुकैर्मुमुक्षुभिः पूर्वं योगाभ्यासेन प्रत्यगात्मैव साक्षात्कर्तव्य इति ॥११॥

अतिदिशति—

**"तथा द्रव्यान्तरेषु प्रत्यक्षम् ॥ १२ ॥**

तथा=यथात्मनि तथा द्रव्यान्तरेषु=सूक्ष्मेषु विप्रकृष्टेषु चात्मभिन्नेषु प्रकृत्यन्तेषु निखिलद्रव्येषु प्रत्यक्षम्=अपरोक्षं ज्ञानमुत्पद्यते इत्यर्थः ॥ १२॥

**ननु** द्विविधा योगिनो भवन्ति—कदाचित्समाहितान्तःकरणाः, सर्वदासमाहितान्तःकरणाश्च, तेषु केषामेतत्प्रत्यक्षमुत्पद्यते ? तत्राह—

**"असमाहितान्तःकरणा उपसंहृतसमाधयस्तेषां च ।१३।**

प्रत्यक्षमित्यनुवर्तते । भिन्नक्रमश्चः । असमाहितान्तःकरणाः=न सर्वदा समाहितमन्तःकरणं चित्तं येषां, ते तथा=कदाचित्समाहितान्तःकरणाः,

ये चोपसंहृतसमाधयः=उपसंहृतः उपसंहारं परिपूर्णतां प्राप्तः समाधिः योगो येषां, ते तथा=सर्वदा समाहितान्तःकारणाः, तेषाम्=उभयेषां तेषां प्रत्यक्षम्=आत्मादिगोचरं प्रत्यक्षं भवतीत्यर्थः ।

**तत्रा**समाहितान्तःकरणानां ध्यानसहकृतान्मनःसंयोगात्, इतरेषां चेन्द्रियार्थसन्निकर्षादिति विवेकः ॥ १३ ॥

**ननु** किं योगिनां द्रव्यवद् द्रव्यसमवेतेषु प्रत्यक्षं न भवति ? तत्राह—

**"तत्समवायात्कर्मगुणेषु ॥ १४ ॥**

प्रत्यक्षं, तेषामिति च पदद्वयमनुवर्तते । तत्समवायात्=इद्रियसंयुक्तद्रव्यान्तरसमवायात्=संयुक्तसमवायात्सन्निकर्षादिति यावत्, कर्मगुणेषु=सामान्यादीनामुपलक्षणमेतत्, द्रव्यान्तरसमवेतेषु कर्मगुणसामान्यविशेषसमवायेषु, तत्समवेतेषु च सयुक्तसमवेतसमवायात्प्रत्यक्षं तेषामुत्पद्यते इत्यर्थः ।

**द्रव्ये**षु संयोगात्, तत्समवेतेषु संयुक्तसमवायात्, तत्समवेतेषु च संयुक्तसमवेतसमवायात्प्रत्यक्षं योगिनां भवतीत्यर्थः ॥ १४ ॥

**न**न्वात्मान्तरवर्तिसुखदुःखादिगुणेपु योगिनां प्रत्यक्षं कथं भवति ? तत्राह—

**"आत्मसमवायादात्मगुणेषु ॥ १५ ॥**

प्रत्यक्षं तेषामिति पूर्ववदनुवर्तते । आत्मसमवायात्=मनःसंयुक्तात्मान्तरसमवायात्सन्निकर्षादात्मगुणेषु=द्रव्यान्तरगुणवदात्मान्तरगुणेपु सुखदुःखादिषु प्रत्यक्षं तेषां भवतीत्यर्थः ।

**मनः**सयुक्तसमवायादात्मान्तरवर्तिनः सुखदुःखादिगुणान् साक्षात्पश्यन्ति तत्रभवन्तो योगिन इति भावः ।

**नव्यास्तु** 'अलौकिकप्रत्यक्षे' सामान्यलक्षणा, ज्ञानलक्षणा, योगजधर्मश्चेति त्रिविधा प्रत्यासत्तिः । तत्र **सामान्यलक्षणा**—धूमत्वादिरूपा, तज्ज्ञानरूपा वा । सामान्यं लक्षणं=स्वरूपं, विषयो वा यस्या इति तद्व्युत्पत्ते. । सा चाश्रयाणां निखिलधूमादीनामलौकिकप्रत्यक्षे उपयुज्यते । अतीतानागतधूमादिषु चक्षुःसंयोगादेरसम्भवात् । असन्निकृष्टाना चेन्द्रियाणां प्रत्यक्षज्ञानाजनकत्वात् । अतस्तज्जन्य निखिलतदाश्रयगोचरं "धूमाः" इत्यादिकं प्रत्यक्षज्ञानमलौकिकम् । अस्य च धूमो वह्निव्याप्यो न वेति संशयोपपत्तिः प्रयोजनम् । एतज्ज्ञानाभावे सशयानुपपत्तेः । प्रत्यक्षे धूमे

वह्निसम्बन्धस्य गृहीतत्वात्, अन्यधूमस्य चानुपस्थितत्वात्। सामान्यलक्षणया निखिलधूमोपस्थितौ तु कालान्तरीयदेशान्तरीयधूमे वह्निव्याप्यत्वसंशयः सम्भवति। तस्मात्तत्स्वीकारः। न च सामान्यलक्षणास्वीकारे प्रमेयत्वेन सकलप्रमेयज्ञाने जाते सर्वज्ञतापत्तिरिति वाच्यम्। प्रमेयत्वेन सकलप्रमेयज्ञाने जातेऽपि विशिष्य सकलपदार्थानामज्ञातत्वेन सार्वज्ञ्याभावात्।

**ज्ञानलक्षणा** तु ज्ञानरूपा। **किमुक्तं?** स्वसंयुक्तसंयुक्तसमवेतविषयत्वरूपा। स्वम्=इन्द्रियम्। सामान्यलक्षणातो ज्ञानलक्षणायामियान् विशेषः—सा हि स्वाश्रयाणां ज्ञानं जनयति, ज्ञानलक्षणा तु यद्विषयकं ज्ञानं, तस्यैव नान्यस्य। फलं चास्याः "सुरभिचन्दनम्" इति सौरभविशिष्टचन्दनखण्डगोचरं चाक्षुषप्रत्यक्षम्। अत्र सौरभस्य भानं न चक्षुषा, तस्य सौरभेण योग्यसन्निकर्षासम्भवात्। किन्तु ज्ञानलक्षणया। चक्षुःसंयुक्तमनःसंयुक्तात्मसवेतस्मृत्यात्मकज्ञानविषयत्वस्य तत्र सत्त्वात्। अन्यथा तद्भानानुपपत्तेरित्याहुः॥ **वैशेषिकाणां** चैते सामान्यलक्षणाज्ञानलक्षणे प्रत्यासत्ती न स्वीकारमर्हतः। फलाभावात्। धूमो वह्निव्याप्यो न वेति सम्बन्धसंशयस्य सामान्यधर्मदर्शनेनाप्युपपत्तेः। सम्बन्धो हि कश्चिद् व्यभिचारी भवति, कश्चिच्च विपरीतः, सम्बन्धश्चायमिति संशयोपपत्तिः। सामान्यलक्षणापि स्वाश्रयव्यक्तीनामेवावगतौ हेतुर्भवति, न तत्सम्बन्धावगतौ। तथा च तद्गोचरसंशयानुपपत्तिस्तदवस्थैव। धर्म्यवगमाभावे संशयासम्भवात्। तदवगतौ च दृष्टसमानयोगक्षेम एव नियतसम्बन्धोऽवगत इति न संशयः स्यात्। "सुरभिचन्दनम्" इति तु क्रमिकं ज्ञानद्वयं, न चैकं ज्ञानम्। सौरभांशे हि स्मरणं, चन्दनांशे च चाक्षुषम्। क्रमस्याग्रहणाच्च यौगपद्याभिमानः इत्यन्यत्र विस्तरः॥ १८॥

**प्रागुत्पत्तेरसत्कार्यं तत्रापि ज्ञानमक्षजम्।**
**योगजं च तथा ज्ञानमाह्निकेऽस्मिन् परीक्षितम्॥ १॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृतायां वैशेषिकसूत्रवैदिकवृत्तौ नवमाध्यायस्याद्यमाह्निकम्॥ १॥

# अथ नवमोऽध्यायः ।

## द्वितीयमाह्निकम् ।

प्रत्यक्षं परीक्ष्य लैङ्गिकं ज्ञानं परीक्षयति—

**"अस्येदं कार्य्यं, कारणं, संयोगि, विरोधि, समवायि चेति लैङ्गिकम् ॥ १ ॥**

चकारेणैकार्थसमवायि लिङ्गं समुच्चिनोति । पूर्वोपात्तत्वात् । अस्य=सम्बन्धषष्ठीयम्, अस्य वह्न्यादिकारणस्येदं=धूमादि कार्य्यम्, अस्य वर्षादिकार्य्यस्येदं=मेघोन्नत्यादि कारणम्, अस्य संयोगिनस्त्वगादेरिदं=शरीरादि संयोगि, विरोधिनोऽस्य मरुदभ्रसंयोगस्येदम्=अवर्षणं विरोधि, समवायिनोऽस्य द्रव्यस्येदं=गुणादि समवायि, स्पर्शादेरेकार्थसमवायिनश्चास्येदं=रूपादिकम्—एकार्थसमवायि, इति=एवं सम्बन्धिनोर्लिङ्गलिङ्गिनोरुभयोः सम्बन्धस्य यद्ग्रहणं, तत्पूर्वकाल्लिङ्गज्ञानात् तत्सम्बन्धिलिङ्गिगोचरं यज्ज्ञानमुत्पद्यते, तल्लैङ्गिकम्=लिङ्गमनुमानं, तज्जातम्=आनुमानिकं ज्ञानमित्यर्थः ।

**अस्येद**मिति सपक्षे गृहीतसम्बन्धेन पक्षे चासन्दिग्धं दृष्टेन कार्य्येण लिङ्गेन कारणस्य, कारणेन कार्य्यस्य, सयोगिना संयोगिनः, विरोधिना विरोधिनः, समवायिना समवायिनः, एकार्थसमवायिना चैकार्थसमवायिनो यज्ज्ञानं, तल्लैङ्गिकमिति भावः ।

**यदत्र** वक्तव्यमासीत्, तत् तृतीयाध्याये प्रोक्तम् । तत्रैव च लिङ्गोदाहरणानि प्रोक्तानि, नातः पुनरुच्यन्ते ॥ १ ॥

**नन्वस्येदम्**, अनयोश्च कार्य्यकारणभावादिसम्बन्ध इति कुतो विज्ञायते ? तत्राह—

**"अस्येदं कार्य्यकारणसम्बन्धश्चावयवाद्भवति ॥ २ ॥**

अस्य=एतद्वस्तुसम्बन्धीदम्=एतद्वस्तु—कार्य्यकारणसम्बन्धश्च=संयोगादेरुपलक्षणमेतत्, परस्परमनयोः कार्य्यकारणभावादिसम्बन्धश्चावयवात्=उदाहरणाद् भवति=विषयेण विषयिणं लक्षयति, ज्ञायते इत्यर्थः ।

**यस्य** येन सम्बन्धः, यश्च सम्बधः, तत्सर्वमुदाहरणात्प्रतिपद्यते। तस्मादुदाहरणमनुरुध्य सर्वदा प्रयोक्तव्यमिति भावः॥ २॥

**लैङ्गिकं** ज्ञानं परीक्षितं, शाब्दं तावत्परीक्षितुमतिदिशति—

**"एतेन शाब्दं व्याख्यातम्॥ ३॥**

एतेन=लिङ्गलिङ्गिसम्बन्धज्ञानपूर्वकलिङ्गज्ञानजन्यलैङ्गिकज्ञानव्याख्यानेन शाब्दं=शब्दतदर्थसम्बन्धज्ञानपूर्वकाच्छब्दज्ञानाज्जायमानं शाब्दं ज्ञानं व्याख्यातं=व्याख्यातं वेदितव्यमित्यर्थः।

**आप्तोपदेशः शब्दः।** साक्षात्करणमर्थानाम्—**आप्तिः,** तया वर्तते यः स **आप्तः।** तस्योपदेशो वाक्यम्, उपदिश्यतेऽनेनेति तद्व्युत्पत्तेः। अथवाऽर्थाव्यभिचारित्वम्—**आप्तिः,** तया वर्तते यः स **आप्तः।** आप्तश्चासावुपदेशश्च इति कर्मधारयः। **अर्थाव्यभिचारि वाक्यं शाब्दप्रमाणम्**—इति तत्समुदायार्थः। तद्द्विविधं—लौकिकं, वैदिकं च। वैदिकमीश्वरोक्तत्वात्सर्वमेव प्रमाणं, लौकिक त्वाप्तोक्तं प्रमाणम्, अन्यदप्रमाणम्। पदानां समूहो **वाक्यं,** शक्त **पदम्,** अस्मात्पदादयमर्थो बोद्धव्य इति भगवन्नियोगात्मकः सङ्केतः **शक्तिः।** सा चाप्तोपदेशेन, वृद्धव्यवहारेण, प्रसिद्धपदसन्निधानेन च गृह्यते। **"त्रिभिः सम्बन्धसिद्धिः"** (सां. अ. ५. स. ३८.) इति कापिलसूत्रात्। तेन च गृहीतशक्तिकस्य **"गामानय" "घटमानय"** इत्यादिवाक्यश्रवणसमनन्तरं तद्घटकीभूतसकलपदानां साक्षात्कारात् **"एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकम्"** इति न्यायेन यथास्थानं सकलपदार्थोपस्थितौ सत्यामासत्तियोग्यताकाङ्क्षातात्पर्य्यज्ञानसहकारेण यदुपस्थितपदार्थानां क्रियाकर्मादिभावेनान्वयरूपं "गोवृत्तिकर्मतानिरूपकानयनानुकुलकृत्याश्रयः प्रेरणाविषयस्त्वम्पदार्थः" इत्यादिकं ज्ञानमुपजायते तदेव शाब्दं ज्ञानमिति भाव।

**तत्र** वृत्तिविशिष्टपदानां ज्ञानं करणम्। वृत्त्या पदजन्यपदार्थस्मरणं व्यापारः। आसत्तियोग्यताऽऽकाङ्क्षातात्पर्य्यज्ञानानि सहकारिकारणानि।

पदार्थानामपूर्वः सम्बन्धः, अपूर्वसम्बन्धवन्तो वा पदार्थाः वाक्यार्थः । तद्गोचरो बोधः शाब्दबोधः, फलं प्रमेति विवेकः ।

**अत्र** पदं चतुर्विधं—यौगिकं, रूढं, योगरूढं, यौगिकरूढं च । **योगोऽ**वयवशक्तिः, तन्मात्रेणार्थप्रतिपादकं **यौगिकम्** । यथा—पाचकादिपदम् । **रूढिः** समुदायशक्तिः, तन्मात्रेणार्थप्रतिपादकं **रूढम्** । यथा-गवादिपदम् । योगरूढिभ्यां परस्परसहकारेणार्थप्रतिपादकं **योगरूढम्** । यथा—पङ्कजादिपदम् । यौगिकं तद्रूढं चेति व्युत्पत्त्या योगेन, रूढ्या च परस्परासहायेनार्थप्रतिपादकं **यौगिकरूढम्** । यथोद्भिदादिपदं योगेन तरुगुल्मादेः, रूढ्या च यागविशेषस्य वाचकम् । एषां शक्तिश्चाप्तोपदेशादिना गृह्यते । यथा यास्कपाणिनिप्रभृतयो निरुक्तकारादयो, मातापित्राचार्य्यादयश्चाप्ताः, तेषामुपदेशेन **"इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्"** इत्यत्र विष्णुरादित्यः, पाचकः पाककर्ता, मातेयं, पिताऽयं, गुरुरयम्, आचार्योऽयं, घटोऽयं, पटोयमित्यादिना विष्णुप्रभृतिपदानामादित्यादौ शक्तिर्गृह्यते । प्रयोजकवृद्धप्रयोज्यवृद्धयोर्व्यवहारः=**वृद्धव्यवहारः** । तेन च यथा—प्रयोजकवृद्धेन "गामानय" इत्युक्तं, तच्छ्रुत्वा प्रयोज्यवृद्धेनानीतः, तत्पश्यता पार्श्वस्थेन व्युत्पित्सुना बालधिया गवानयनरूपं कार्य्यं नूनं गामानयेति शब्दप्रयोज्यमिति निश्चित्य "गां बधान" "अश्वमानय" इत्यादिवाक्यान्तरादावापोद्वापाभ्यां गोपदस्य गोत्वविशिष्टे, अश्वपदस्य चाश्वत्वविशिष्टे शक्तिर्गृह्यते । प्रसिद्धपदसन्निधानेन च यथा—**"विकसितपद्मे मधूनि पिबति मधुपः"** इत्यादौ विकसितपद्मसन्निधानान्मधुपपदस्य मधुकरे शक्तिः । आसत्तियोग्यताकाङ्क्षातात्पर्य्यज्ञानानि च शाब्दबोधकारणानि । तत्र **यत्पदार्थेन सह यत्पदार्थस्यान्वयोऽपेक्षितः,तयोः पदयोरव्यवधानेनोपस्थितिरासत्तिः** । सा यत्र विद्यते, तत्र शाब्दबोधो जायते, नान्यत्र । तेन "गिरिर्भुक्त वह्निमान् देवदत्तेन" इत्यादौ न शाब्दबोधः । नीलो घटः, द्रव्यं पट इत्यत्र त्वासत्तिभ्रमाच्छाब्दबोध. । आसत्तिभ्रमेण च शाब्दभ्रमाभावेऽपि न क्षतिः । भ्रमप्रमासाधारणासत्तिज्ञानस्य शाब्दबोधहेतुत्वाभ्युपगमात् । **केचित्तु**

श्लोकादौ पदव्यवधाने सत्यपि शाब्दबोधदर्शनात्। "**शक्तिलक्षणाऽन्यतरसम्बन्धेन पदेभ्योऽन्वययोग्यपदार्थानामुपस्थितिरासत्तिः**" इत्याहुः। अस्मिन् मते च स्वरूपसत्यैवासत्तिः शाब्दबोधहेतुर्न तज्ज्ञानमिति विशेषः।

**एकपदार्थेऽपरपदार्थसम्बन्धो योग्यता**। सा यत्र ज्ञायते तत्र शाब्दबोधो, नान्यत्र। तेन वह्निना सिञ्चतीत्यादौ न शाब्दबोधः। तत्र तज्ज्ञानाभावात्। **अर्थाबाधो वा योग्यता**। तेन वह्निना सिञ्चतीत्यादौ वह्नौ सेककरणत्वरूपार्थस्य प्रत्यक्षेण बाधान्न शाब्दबोधः॥

नन्वेतस्याः योग्यतायाः ज्ञानं शाब्दबोधात्प्राक् सर्वत्र न सम्भवति, वाक्यार्थस्या पूर्वत्वात्। न। तत्तत्पदार्थोपस्थितौ सत्यां क्वचित्संशयात्मकस्य, क्वचिच्च निश्चयात्मकस्य तज्ज्ञानस्य सम्भवात्।

**पदस्यपदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमाकाङ्क्षा**। किमुक्तं ? यत्पदस्य यत्पदाभावप्रयुक्तमन्वयबोधाजनकत्वं, तस्य तद्वत्त्वमाकाङ्क्षा। **किं बहुना**—येन पदेन विना यस्य पदस्यान्वयाननुभावकत्वं, तेन पदेन सह तस्याकाङ्क्षा। क्रियापदं विना कारकपदं नान्वयबोधं जनयति, तेन तस्य तदाकाङ्क्षा। यत्र तु कारकपदं विद्यते, क्रियापदं नास्ति, तत्र क्रियापदमध्याहार्य्यम्। तेन विना शाब्दबोधानुपपत्तेः। न चार्थाध्याहारेण निर्वाहः। पदजन्यपदार्थोपस्थितेरेव शाब्दबोधहेतुत्वात्। क्रियाकारकपदानां च तेनतेनैव रूपेणाकाङ्क्षितत्वात्। अतो यत्र द्वारमित्युक्तं, तत्र पिधेहि, यत्र पुष्पेभ्य इत्युक्तं, तत्र स्पृहयतीति क्रियापदमध्याहर्तव्यम्। तेन विना चतुर्थ्यनुपपत्तेरिति द्रष्टव्यम्।

**इदमिह बोध्यं**—यथा हि भूयः सहचारदर्शनेनावगतलिङ्गिसम्बन्धं लिङ्गं ज्ञातं सल्लिङ्गिनि लैङ्गिकं ज्ञानमुपजनयति, तथैवाप्तोपदेशादिभिस्त्रिभिरवगतार्थसम्बन्धः शब्दो ज्ञातो भवन्नर्थे शाब्दं बोधमुत्पादयति। समानोऽनयोरर्थजननप्रकार इत्यतिदेशः। न त्वयं शब्दे प्रमाणान्तरत्वाभावाभिप्रायकः। वेदानामीश्वरीयत्वेन स्वतःप्रामाण्यस्य साधनात्। "**तद्वचनादाम्नायस्य प्रामाण्यम्**" (वै. अ. १० आ. २ सू. १०)

इति चोपसंहारेऽभिधास्यमानत्वात् । अन्यथा सर्वविप्लवापत्तेः । वाक्यार्थस्य चापूर्वत्वेनानुमेयत्वानुपपत्तेः । अतो भ्रान्ताः नूनं **नव्याः** यत्प्रत्यक्षमनुमानमिति द्वयमेव प्रमाणं वैशेषिकाणां न शब्द इति **कल्पयन्ति** । भ्रान्तिमूलकत्वाच्चायुक्तं तत् कल्पनम् । तस्माद्वैदिकैरेतद्दूरतः परित्याज्यं, वैशेषिकाणां च परमादरेण प्रत्यक्षानुमानशब्दा इति प्रमाणत्रयमुपादेयमिति ॥३॥

**परिभाषासूत्रं** पठति—

**"हेतुरपदेशो लिङ्गं प्रमाणं करणमित्यनर्थान्तरम् ॥४॥**

हीयते=गम्यतेऽनेनेति **हेतुः**, अपदिश्यते—निदर्शनबलेन ज्ञायतेऽनेनेति **अपदेशः**, लिङ्ग्यते=लक्ष्यतेऽनेनेति **लिङ्गं**, प्रमीयतेऽनेनेति **प्रमाणं**, क्रियते=अतिशयेन साध्यतेऽनेनेति **करणम्**, इति=एतद्धेत्वादिपञ्चकमनर्थान्तरं=नान्यार्थकं=समानार्थकमित्यर्थः ।

**य** एव हेतुः, स एवापदेशः, तदेव लिङ्गं, तदेव प्रमाणं, तदेव च करणं, शब्दमात्रं भिद्यते नार्थं इति भावः ॥ ४ ॥

**ननु** प्रत्यक्षलैङ्गिकशाब्दज्ञानवदुपमित्यादीनि ज्ञानानि कुतो न परीक्षितानि ? तत्राह—

**"अस्येदमिति बुद्ध्यपेक्षितत्वात् ॥ ५ ॥**

अस्य व्यापकस्येदं व्याप्यमित्याकारा या सम्बन्धगोचरा बुद्धिः, सा जनकत्वेनापेक्षिता यैस्तानि तथा, तेषां भावस्तत्त्वं, तस्मात्=अस्येदमिति सम्बन्धबुद्धिमपेक्ष्य जायमानत्वात् तानि लैङ्गिकज्ञानतो नातिरिक्तानि सन्तीत्यर्थः ।

**यथा** हि लैङ्गिकं ज्ञानम् "अस्येदमिति सम्बन्धबुद्धिमपेक्ष्य जायते, तथैवोपमित्यादीनि ज्ञानान्यपि सम्बन्धबुद्धिमपेक्ष्य जायन्ते, न तत्र किञ्चिद्वैलक्षण्यमस्ति, येन तदतिरेकेण तानि परीक्षितव्यानि स्युरिति भावः ।

**सादृश्यज्ञानजन्यं, वैधर्म्यज्ञानजन्यं वा ज्ञानमुपमितिः** । तत्र च कुतश्चिदारण्यकपुरुषादाप्ताद् **"गोसदृशो गवयः"** इत्युपश्रुत्य दैवादारण्यं गतो नागरिको गवयं पश्यन् यदध्यवस्यति "गोसदृशोऽयम्" इति, तत्सादृश्यज्ञानमुपमितिकरणत्वादुपमानम् । तदनु

च तस्य यदारण्यकपुरुषोपदिष्टवाक्यार्थस्य स्मरणं जायते, स च व्यापारः । तज्जन्यत्वे सति तज्जन्यजनकत्वात् । पश्चात्स यन्निश्चिनोति "नूनमेष गवयः" इति, तज्ज्ञानमुपमितिः । एवम् **"उष्ट्रविधर्मा नासिकाग्रे च लसदेकशृङ्गः खड्गमृगः"** इति कुतश्चिदारण्यकपुरुषादुपश्रुत्य दैवादारण्यं गतस्य नागरिकस्य खड्गमृगं पश्यतो यदुष्ट्रविधर्मायमिति ज्ञानमुपजायते, तदुपमानम् । अतिदेशवाक्यार्थस्मरणं व्यापारः । "नूनमेष खड्गमृगः" इति च ज्ञानमुपमितिः । एतच्चोपमितिद्वयं लैङ्गिकज्ञानमेव सम्पद्यते, न तदतिरिक्तम् । "गोसदृशो गवयः" इति गवयस्येदं गोसादृश्यमिति गवयपदवाच्यत्वव्याप्यतया गृहीतेन गोसादृश्यरूपलिङ्गेन, "उष्ट्रविधर्मा नासिकाग्रे च लसदेकशृङ्गः खड्गमृगः" इति खड्गमृगस्येदमुष्ट्रवैधर्म्यमिति खड्गमृगपदवाच्यत्वव्याप्यतया गृहीतेन चोष्ट्रवैधर्म्यरूपलिङ्गेन जायमानत्वात् । यो हि शब्दो यत्र वृद्धैः प्रयुज्यते, सोऽसति वृत्त्यन्तरे तस्य वाचको भवति, यथा—गोशब्दो गोत्वविशिष्टस्य पिण्डस्य । प्रयुज्यते चैष गवयशब्दो गोसदृशे, तस्मादयं तस्य वाचक इति च प्रयोगसम्भवात् । **अथवा**ऽऽप्तेनारण्यकपुरुषेणाप्रसिद्धगवयस्य नागरिकस्य "कीदृग् गवयः" इति पृच्छतो गोसादृश्येन गवयस्य प्रतिपादनादाप्तवचनमेवोपमानं, न पृथक्प्रमाणम् ।

**उपपाद्यान्यथानुपपत्तिज्ञानादुपपादकज्ञानमर्थापत्तिः ।**

यद्विना यन्नोपपद्यते, तत्तस्योपपादकम्, इतरच्चोपपाद्यम् । उपपादकं सम्पादकम्, उपपाद्यं सम्पाद्यमिति चानर्थान्तरम् । अर्थापत्तिशब्दश्च प्रत्यक्षशब्दवत्फलकरणयोः साधारणः । **"पीनोऽयं देवदत्तो दिवा न भुङ्क्ते"** इति दृष्टं, श्रुतं वा पीनत्वमुपपाद्यम् । तच्च दिवाऽभोजिनि देवदत्ते रात्रिभोजनं विना नोपपद्यते । तस्य तत्सम्पाद्यत्वात् । अतस्तदन्यथाऽनुपपत्तिज्ञानादुपपादकस्य रात्रिभोजनस्य ज्ञानमर्थापत्तिः । **"शतवर्षजीवी चैत्रो गृहे न विद्यते"** इति श्रुतं चैत्रस्य शतवर्षजीवित्वमुपपाद्यम् । तच्च गृहेऽसतश्चैत्रस्य बहिः सत्त्वं विना नोपपद्यते । तदन्यथानुपपत्तिज्ञानादुपपादकस्य बहिः सत्त्वस्य ज्ञानमर्थापत्तिः । तत्रोपपाद्या-

न्यथानुपपत्तिज्ञानमर्थापत्तिप्रमाणम् । अर्थस्य रात्रिभोजनादेरापत्तिः=प्राप्तिः=ज्ञानं यस्मादिति तद्व्युत्पत्तेः । उपपादकज्ञानमर्थापत्तिप्रमा, फलमिति यावत् । अर्थस्यापत्तिः=प्राप्तिः=ज्ञानमिति तद्व्युत्पत्तेः । न चैषाऽपि लैङ्गिकज्ञानतोऽतिरिच्यते । अस्योपपादकस्येदमुपपाद्यमिति गृहीतसम्बन्धेन दृष्टेन वा, श्रुतेन वोपपाद्येन लिङ्गेनोपपादकस्य लिङ्गिनः साधनात् । तत्र देवदत्तो रात्रौ भुङ्क्ते, दिवाऽभुञ्जानत्वे सति पीनत्वात्, चैत्रो बहिर्विद्यते, शतवर्षजीवित्वे सति गृहेऽविद्यमानत्वात्, इति प्रयोगोपपत्तेः । **विरोधिज्ञानाद्विरोधिनो ज्ञानमभावः** । यथा—अविद्यमानाद्वर्षकर्मणो विद्यमानस्य मरुदभ्रसंयोगस्य ज्ञानम् । तदपि लैङ्गिकम् । अस्येदमिति बुद्ध्यपेक्षितत्वात् । अथवा **योग्यानुपलब्ध्या प्रमेयाभावोपलब्धिरभावः ।** तच्च योग्यानुपलब्ध्या सहकृतेनेन्द्रियेण जायमानत्वात्प्रत्यक्षमित्युक्तम् । **अविनाभाविनोऽर्थस्य सत्ताज्ञानादन्यस्य सत्ताज्ञानं सम्भवः** । यथा—द्रोणस्य सत्ताज्ञानादाढकस्य सत्ताज्ञानम्, आढकस्य सत्ताज्ञानात्प्रस्थस्य सत्ताज्ञानम् । सहस्रसत्ताज्ञानाद्वा शतसत्ताज्ञानं, शतसत्ताज्ञानाच्च पञ्चाशत्सत्ताज्ञानम् । एतदपि लैङ्गिकं ज्ञानम् । अस्येदमिति सम्बन्धबुद्धिमपेक्ष्य जायमानत्वात् । **ऐतिहासिकं ज्ञानमैतिह्यम्** । "इति ह" इति निपातसमुदायः प्रवादपारम्पर्ये वर्तते, ततः स्वार्थिकः ष्यञ् प्रत्ययः, तस्माज्जातं ज्ञानमैतिह्यम् । तच्चाप्तप्रवक्तृकत्वनिश्चये शाब्दम्, इतरथा त्वप्रमाणमिति निश्चेतव्यम् ।

**इदमत्र बोध्यं**—वैदिकाः हि सामान्यतस्तावदष्टौ प्रमाणानि मन्यन्ते—प्रत्यक्षमनुमानं, शब्दः, उपमानमर्थापत्तिरभावः, सम्भवः, ऐतिह्यमिति । तेषामर्थापत्त्यादीनामनुमानादिष्वन्तर्भावाच्चत्वार्य्येव प्रमाणानीति **गौतमाचार्य्याः** । उपमानस्याप्यनुमानान्तर्भावसम्भवात् प्रत्यक्षमनुमानं, शब्दः, इति त्रीण्येव प्रमाणानीति वैशेषिकादयो वैदिकान्तराणि, इति ॥ ९ ॥

**अनुभवलक्षणा** प्रत्यक्षलैङ्गिकशाब्दभेदात् त्रिविधा विद्या तावत्परीक्षिता, सम्प्रति स्मृतिलक्षणां तां परीक्षितुमुपक्रमते—

**"आत्ममनसोः संयोगविशेषात्संस्काराच्च स्मृतिः॥ ६ ॥**

आत्ममनसोः=आत्मनो, मनसश्च संयोगविशेषात्=लिङ्गदर्शनेच्छानुसरणप्रणिधाननिबन्धाभ्यासादिसहकृतत्वं संयोगे विशेषः, तथाभूतात्तस्मादसमवायिकारणात्, संस्काराच्च=पूर्वानुभवजनितभावनाख्यसंस्काराच्च निमित्तकारणात्स्मृतिः=आत्मनि समवायिकारणे स्मरणात्मकं ज्ञानमुत्पद्यते इत्यर्थः ॥ ६ ॥

द्विविधा खलु स्मृतिः—अभावितस्मर्तव्या, भावितस्मर्तव्या च, तत्राद्यां परीक्ष्य द्वितीयां परीक्षयन्नतिदिशति—

**"तथा स्वप्नः ॥ ७ ॥**

तथा=यथाऽऽत्ममनसोः संयोगविशेषात्संस्काराच्च स्मृतिरुत्पद्यते,तथा स्वप्नः=भावनामयस्वाप्नपदार्थगोचरं ज्ञानमुत्पद्यते इत्यर्थः ।

यस्यामवस्थायां हि बाह्येन्द्रियाणि स्वस्वविषयग्रहणाद् विरमन्ति, मनश्च तत्सम्बन्धं परित्यज्यात्मप्रदेशेऽन्तर्हृदये निश्चलमवतिष्ठते, तामेव स्वप्नमाचक्षते । तस्यां चावस्थायां बाहुल्येन प्राणापानवायुसन्ताननिर्गमप्रवेशलक्षणायां प्रवृत्तौ सम्भवन्त्यामल्पनिद्रासहकृतात्स्वापाख्यादात्ममनःसंयोगविशेषात, पूर्वानुभूतविषयग्रामसंस्कारपाटवाच्च भावनामयेषु तेषुतेषु विषयेषु यत्प्रत्यक्षाकारमिव मानसं ज्ञानमुत्पद्यते, तदेव स्वप्नः । तच्च स्मृत्यात्मकमेव, नानुभवात्मकम् । संस्कारमात्रजन्यत्वात् । तथा चोक्तं वृत्तिकृता "**अनुभूतवस्तुस्फुरणार्थतया न स्मरणादर्थान्तरं स्वप्न ज्ञानम्**" इति । **शङ्कराचार्यै**रपि ब्रह्ममीमांसायामभिहितम् "**अपि च स्मृतिरेषा, यत्स्वप्नदर्शनम्**" (अ० २।२।२९) इति । देशकालव्यवहितेषु विषयेषु भवतोऽपि तस्य प्रत्यक्षवदवभासस्तु शुक्तिरजतादिवत् संस्कारपाटवधातुनिद्रादिदोषवशादवगन्तव्यो, न स्वतः । स्मृतित्वव्याघातात् । अत एव च नेयं स्मृतिः, अपि च स्मृत्याभासः । स्मृतित्वसामान्याच्चातिदेश इति भावः ॥ ७ ॥

अतिदेशान्तरमाह—

**"स्वप्नान्तिकम् ॥ ८ ॥**

तथेत्यनुवर्त्तते । यथाऽऽत्ममनसोः संयोगविशेषात्संस्काराच्च स्वप्नः, तथा स्वप्नान्तिकं=स्वप्नावस्थायामेव स्वप्नदृष्टस्यार्थस्य प्रत्यवेक्षणात्मक ज्ञानमुत्पद्यते इत्यर्थः ।

यत्कदाचित्स्वप्नावगतस्यार्थस्य स्वप्नावस्थायामेव प्रतिसन्धानं भवति—"कदाचिदयं मया दृष्टः" इति, तदेव ज्ञान स्वप्नान्तिकमुच्यते । स्वप्नस्यान्ते अवसाने भवतीति तद्व्युत्पत्तेः । तदपि स्वप्नवत्स्मृतिरेव । पूर्वावगतस्य स्वप्नज्ञानप्रबन्धस्यैवानुसन्धानात् । अत एव चातिदेश इति भाव. ।

तत्र स्वप्नज्ञानं पूर्वानुभवजनितात्संस्काराद् भवति, स्वप्नान्तिकं तु तत्कालोत्पन्नज्ञानजनितात्संस्कारादिति विशेषः ॥ ८ ॥

ननु स्वप्नज्ञाने स्मृतिज्ञानतो वैलक्षण्यमनुभूयते, कार्य्यवैलक्षण्यं च कारणवैलक्षण्यमन्तरेणानुपपन्नम्, अतः कथमुच्यते यथा स्मृतिरात्ममनसो. सयोगविशेषात्संस्काराच्चोत्पद्यते, तथा स्वप्नः? तत्राह—

**"धर्माच्च ॥ ९ ॥**

अधर्मादिकं धर्मेणोपलक्षयति । स्वप्न इत्यनुवर्तते । धर्मादिकारणतोऽपि स्वप्नो भवतीत्यर्थः ।

न केवलं स्मृतिवदात्ममनसोः संयोगविशेषः, संस्कारश्चेति कारणद्वयमेव स्वप्नज्ञाने कारणम्, अपि च धर्माधर्मधातुदोषरूपकारणान्तरसहित कारणत्रयम् । अतो युक्तं तस्मिन् स्मृतिज्ञानतो वैलक्षण्यमिति भाव. ।

तत्र कामी वा, क्रुद्धो वा यमर्थमाहतश्चिन्तयन् स्वपिति, तस्य तस्यामवस्थाया यत्प्रत्यक्षाकारमिव तदर्थगोचर ज्ञानमुत्पद्यते, तत्-सस्कारपाटवात् । यदाकाशगमनादिकम्, अग्निप्रवेशकनकाचलाभ्युदितार्कमण्डलादिकम्, सरित्समुद्रप्रतरणहिमपर्वतादिकं च पश्यति, तद् वातपित्तश्लेष्मणां धातूनां दोषात् । यच्छुभावेदक गजारोहणच्छत्रलाभादिकं पश्यति, तत्संस्कारधर्माभ्यां, यदशुभावेदक तैलाभ्यञ्जनखरोष्ट्रारोहणादिकं पश्यति, तदधर्मसस्काराभ्यामिति विवेकः ॥ ९ ॥

परीक्षिता स्मृतिः, इदानीमविद्या परीक्ष्यते—

**"इन्द्रियदोषात्संस्कारदोषाच्चाविद्या ॥ १० ॥**

चकारेणाधर्मादिकं समुच्चिनोति। इन्द्रियदोषात्=मनःप्रभृतीन्द्रियाणां दोषात्, संस्कारदोषाच्च=संस्काररूपदोषादधर्मादितश्चाविद्या=संशयविपर्य्ययान्यतरलक्षणाऽविद्योत्पद्यते इत्यर्थः।

**या** प्रसिद्धानेकविशेषयोर्धर्मिणोरेकस्मिन् धर्मिणि क्वचिदिन्द्रियाणां दोषेणायथार्थालोचनात्, संस्कारदोषेण चासन्निहितस्य धार्मिणः स्मरणात्, स्वरूपाप्रतिष्ठन्ती काचिद्विद्योत्पद्यते, साऽविद्येति भावः।

**तत्र** मनसो रजस्तमोऽतिशयो दोषः, चक्षुरादेश्च पित्तादिर्दोष इति विवेकः।

**संस्कारदोषो** भ्रमानुभवजातत्वादिरिति **जयनारायणः**। विशेषादर्शनसाहित्यमिति **शङ्करमिश्रः**। **द्विविधा** खल्वविद्या—संशयो, विपर्य्ययश्च। तत्र प्रसिद्धानेकविशेषयोर्धर्मिणोरेकस्मिन् धर्मिणि क्वचिदिन्द्रियदोषेणायथार्थालोचनात्, **किमुक्तं**? विशेषानालोचनेन सामान्यमात्रालोचनात्, संस्कारदोषेण च तदुभयविशेषानुस्मरणादधर्माच्च जायमानः किं स्विदित्युभयालम्बी विमर्शः संशयः। स च सलक्षणः सावान्तरप्रभेदो द्वितीयाध्यायस्य द्वितीयाह्निके प्राक् परीक्षितः। **प्रसिद्धानेकविशेषयोर्धर्मिणोरिन्द्रियाणां दोषेणायथार्थालोचनात्, संस्कारदोषेण चासन्निहितस्य धर्मिणः स्मरणादधर्माच्चातस्मिँस्तदिति प्रत्ययो विपर्य्ययः**। स च बहुप्रकारोऽपि प्रत्यक्षानुमानशब्दविषय एव भवति। प्रत्यक्षविषये—यथा—शुक्ताविदं रजतं, रज्ज्वामयं सर्पः, गव्ययमश्व इति। क्वचिदसत्यपि प्रत्यक्षे प्रत्यक्षाभिमानो भवति। यथा—व्यपगतघनपटलमचलजलनिधिसदृशमम्बरम्, अञ्जनचूर्णपुञ्जश्यामं शार्वरं तम इति। अनुमानशब्दविषये यथा—धूमाभिमतैर्बाष्पादिभिर्वह्न्यनुमानं, गवयविषाणदर्शनाच्च गौरिति, वेददर्शनविपरीतेषु शाक्यादिदर्शनेष्विदं श्रेय इति, शरीरेन्द्रियमनस्स्वनात्मस्वात्मेति, कृतकेषु नित्यत्वदर्शनं, कारणवैकल्ये कार्य्योत्पत्तिज्ञानम्, हितमुपदिशत्स्वहितमिति ज्ञानम्, अहितमुपदिशत्सु च हितमिति ज्ञानमिति बोध्यम्॥ १०॥

**ननु** केयमविद्या भवति ? तत्राह—

**"तद् दुष्टज्ञानम् ॥ ११ ॥**

दुष्टज्ञानं=दोषो बाधः, तद्युक्तं ज्ञानं तत्=विधेयलिङ्गत्वान्नपुंसकम्, सेत्यर्थः ।

दुष्टं ज्ञानमविद्येति भावः ॥ ११ ॥

**ननु** विद्या का भवति ? तत्राह—

**अदुष्टं विद्या ॥ १२ ॥**

अदुष्टम्=उक्तदोपरहितं ज्ञानं विद्येत्यर्थः ।

अबाधितार्थविषयं ज्ञानं विद्येति भावः ॥ १२ ॥

**ननु** वैशेषिकाचार्य्यैरिदं कुतो ज्ञातं ? तत्राह—

**"आर्षं सिद्धदर्शनं च धर्मेभ्यः ॥ १३ ॥**

आर्षम्=ऋषीणामिदं सिद्धदर्शनं च=वेदसिद्धानां पदार्थानां यथार्थज्ञानं तु धर्मेभ्यः=इहामुत्रकृतवैदिककर्मानुष्ठानेभ्यो भवतीत्यर्थः ।

**इदमत्रोपदिष्टं भवति**—सर्वेषामभ्युदयानां, निःश्रेयसस्य च परमं साधनं कायेन, मनसा, वाचा, वैदिककर्मानुष्ठानमिति ॥ १३ ॥

**लैङ्गिकं शब्दजं ज्ञानं नोपमानादिमानता ।**
**स्मृतिः स्वप्नान्तिकं स्वप्नोऽविद्या चास्मिन् परीक्षिता ॥१॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृतायां वैशेषिकसूत्रवैदिकवृत्तौ-
नवमाध्यायस्य द्वितीयमाह्निकम् ॥

समाप्तश्च ज्ञानविशेषाध्यायो नवमः ॥ ९ ॥



# अथ दशमोऽध्यायः।

## आद्यमाह्निकम्।

बुद्धिः सप्रपञ्चा परीक्षिता, सम्प्रति क्रमप्राप्तयोः सुखदुःखयोः परीक्षामारभमाणः पूर्वं तयोः परस्परमर्थान्तरभावमाह—

**"इष्टानिष्टकारणविशेषाद्विरोधाच्च मिथः सुखदुःखयोरर्थान्तरभावः ॥ १ ॥**

सुखदुःखयोः=सुखस्य, दुःखस्य च मिथः=परस्परमर्थान्तरभावः=भिन्नार्थत्वं=भेदः=वैशिष्ट्यमस्ति। कुतः? इष्टानिष्टकारणविशेषात्=इष्यमाणं साम्राज्यराज्यस्वातन्त्र्यस्रक्चन्दनवनितादिकमिष्टम्, अनिष्यमाणं दारिद्र्यभृतिपारतन्त्र्याहिकण्टकादिकमनिष्टम्, तद्रूपयोः सुखदुःखकारणयोर्विशेषात्=मिथो भेदात्, विरोधाच्च=परस्परं सहानवस्थानलक्षणविरोधाच्चेत्यर्थः।

इष्टकारणकं हि सुखम्, अनिष्टकारणकं च दुःखम्। न चैते सह भवतः। अतोऽनयोः परस्परमर्थान्तरभाव इति गम्यते। भिन्नकारणकयोरेकत्र चासहवसतोस्तयोरभेदासम्भवादिति भावः॥ १ ॥

**ननु** सुखदुःखयोः परस्परमर्थान्तरभावेऽपि ज्ञानतोऽर्थान्तरत्वे को हेतुः? तत्राह—

**"संशयनिर्णयान्तराभावश्च ज्ञानान्तरत्वे हेतुः ॥ २ ॥**

सुखदुःखयोरित्यनुवर्तते। संशयनिर्णयान्तराभावश्च=संशयनिर्णयान्तगर्तत्वाभावश्च सुखदुःखयोर्ज्ञानान्तरत्वे=ज्ञानतोऽर्थान्तरत्वे हेतुः=लिङ्गमित्यर्थः।

द्विविधं हि ज्ञानं-संशयो, निर्णयश्च। न च सुख दुःखे तयोरन्तरे भवितुमर्हतः। प्रतीतिकार्य्याभ्यां विलक्षणत्वात्। तदन्तराभावश्च तयोर्ज्ञानतोऽन्यत्वे भवति हेतुः। कल्पान्तरानुपपत्तेरिति भावः॥ २ ॥

**ननु** सुखदुःखे कथमुत्पद्येते? तत्राह—

**"तयोर्निष्पत्तिः प्रत्यक्षलैङ्गिकाभ्याम् ॥ ३ ॥**

तयोः=सुखदुःखयोर्निष्पत्तिः=उत्पत्ति. प्रत्यक्षलैङ्गिकाभ्यां=प्रत्यक्षलैङ्गिकज्ञाननिष्पतिव्याख्यानाभ्यां व्याख्यातेत्यर्थः।

**यथा** हि प्रत्यक्षमिन्द्रियार्थसन्निकर्षात्, लिङ्गदर्शनाच्च लैङ्गिक ज्ञानमुत्पद्यते । तथैवाऽभिप्रेतविषयसान्निध्ये सतीष्टोपलब्धीन्द्रियार्थसन्निकर्षात्, अभिप्रेतविषयप्राप्तिलिङ्गदर्शनाच्च सुखमुत्पद्यते, विपर्य्ययेण च दुःखम् । तस्मात्प्रत्यक्षलैङ्गिकज्ञानोत्पत्तिव्याख्यानेनैव तदुत्पत्तिरपि व्याख्याता वेदितव्येति भावः ॥ ३ ॥

**नन्वतीतानागतासन्निहितविषयेषु** सुखदुःखयोर्निष्पत्तिः कथं भवति? तत्राह—

**"अभूदित्यपि ॥ ४ ॥**

तयोर्निष्पत्तिरित्यनुवर्त्तते । भविष्यतीत्यपेरर्थः । अभूदिति=मम साम्राज्यादिकं सुखसाधनमभूदिति स्मरणादतीतेषु, मम साम्राज्यादिकं सुखसाधनं भविष्यतीति सङ्कल्पादनागतेषु विषयेषु तयोर्निष्पत्तिर्भवतीत्यर्थः ।

**अनुकूलवेदनीयं हि सुखं ।** तदभिप्रेतविषयेषु साम्राज्यादिषु सन्निहितेषु सत्स्विन्द्रियार्थसन्निकर्षाद् धर्माद्यपेक्षादात्ममनसोः संयोगविशेषात्, अतीतेषु चानुस्मरणात्, अनागतेषु च तेषु सङ्कल्पादुत्पद्यते । यत्तु विदुषामात्मज्ञानवतामसति विषयसन्निधानेऽसति चानुस्मरणेऽसति सङ्कल्पे चाविर्भवति, तद्विद्याशमसन्तोषधर्मविशेषनिमित्तम् । **प्रतिकूलवेदनीयं च दुःखम् ।** तच्चानभिप्रेतविषयेषु दारिद्र्यादिषु सन्निहितेषु सत्स्विन्द्रियार्थसन्निकर्षादधर्माद्यपेक्षादात्ममनसोः संयोगादुत्पद्यते । अतीतेषु च तेषु स्मरणात्, अनागतेषु च संकल्पादिति भावः ॥ ४ ॥

**ननु** ययोः सुखदुःखयोः प्रत्यक्षलैङ्गिकज्ञाननिष्पत्तिव्याख्यानेन निष्पत्तिर्व्याख्यायते, न च ते ततोऽर्थान्तरभावमर्हतः, समाननिष्पत्तिप्रकारकत्वात्; तत्राह—

**"सति च कार्य्यादर्शनात् ॥ ५ ॥**

तयोरित्यनुवर्त्तते । अर्थान्तरभाव इति शेषः । सति च=प्रत्यक्षे, लैङ्गिके च ज्ञाने सत्यपि कार्य्यादर्शनात्=सुखकार्य्यस्य मुखप्रसादादेः, दुःखकार्य्यस्य च मुखमालिन्यादेरदर्शनात्=अनुपलम्भात् तयोस्ततोऽर्थान्तरभाव इत्यर्थः ।

चेत्सुखदुःखयोः प्रत्यक्षलैङ्गिकज्ञानतोऽर्थान्तरभावो न स्यात्, तदा प्रत्यक्षे, लैङ्गिके च सति मुखप्रसादमुखमालिन्यादिलक्षणं तत्कार्य्यमवश्यं दृश्येत। "**कारणभावात्कार्य्यभावः**" (४।१।३) इत्युक्तत्वात्। न च तस्मिन् सत्यपि तद् दृश्यते। ततो भवति प्रतिपत्तिः "नूनमेतयोः ततोऽर्थान्तरभावः" इति ॥ ५ ॥

भेदकान्तरमाह—

**"एकार्थसमवायिकारणान्तरेषु दृष्टत्वात् ॥ ६ ॥**

तयोरित्यनुवर्तते। अर्थान्तरभाव इति पूर्ववच्छेषः। एकार्थसमवायिकारणान्तरेषु=यस्मिन्नात्मरूपार्थे सुखदुःखे समवेतः, तस्मिन्नेवैकस्मिन्नर्थे यानि समवयन्ति कारणान्तराणि='धर्मः, सुखरागः, सुखकारणेच्छा, सुखसाधनोपादानयत्नः, सुखसाधनज्ञानम्, अधर्मः, द्वेषः, दुःखसाधनज्ञानम्, इत्यादीनि कारणान्तराणि, तेषु सत्सु दृष्टत्वात्=सुखदुःखयोर्दर्शनात् तयोस्ततोऽर्थान्तरभाव इत्यर्थः।

यादृक्षु कारणेषु सत्सु सुखदुःखे भवत, न तादृक्षु कारणेषु सत्सु प्रत्यक्षलैङ्गिके भवतः। अन्यद्धि कारणं सुखस्य, अन्यद्दुःखस्य, अन्यत्प्रत्यक्षस्य, अन्यच्च लैङ्गिकस्य। धर्मादिभ्यो हि सुखमुत्पद्यते, अधर्मादिभ्यो दुःखम्। इन्द्रियार्थसन्निकर्षात्प्रत्यक्षम्, अस्येदमिति सम्बन्धज्ञानपूर्वकलिङ्गदर्शनाच्च लैङ्गिकम्। चेत्सुखदुःखे ज्ञानप्रभेदावेव स्यातां, तदा प्रत्यक्षलैङ्गिककारणेषु सत्सु नियमेन जायेयाताम्। न च तत्कारणेषु सत्सु जायेते, किन्तु धर्मादिषु कारणान्तरेषु सत्सु। ततो भवति प्रतिपत्तिः—नूनमनयोर्ज्ञानतोऽर्थान्तरभाव इति भावः ॥ ६ ॥

**ननु** कारणभेदाच्चेत्कार्य्यभेदः, तदा लोहितरेतसोः कारणयोरविशेषादेकस्मिन् शरीरे शिरः, पृष्ठमित्यादितदवयवभेदो न स्यात्, तत्राह—

**"एकदेश इत्येकस्मिञ्छिरः पृष्ठमुदरं मर्म्माणि, तद्विशेषस्तद्विशेषेभ्यः ॥ ७ ॥**

एकस्मिन्=एकस्मिन् शरीरे, शिरः, पृष्ठमुदरं, मर्माणि, इति=एवंभूतो

यो व्यवहारविशेषः, स एकदेशे=शरीरावयवे मन्तव्यः। तद्विशेषः=शरीरावयवानां परस्परं भेदस्तु तद्विशेषेभ्यः=तत्कारणभेदेभ्य इत्यर्थः ।

**लोहितरेतसोः** कारणयोरविशेषेऽपि तदवान्तरविशेषात्कार्य्यविशेषः । सर्वत्र कारणवैजात्यादेव कार्य्यवैजात्याभ्युपगमात् । कारणवैजात्यं च कार्य्यवैजात्यानुगम्यम् । अतो न कश्चिद्दोष इति भावः ॥ ७ ॥

**सुखदुःखे मिथो भिन्ने स्वकारणविशेषतः ।**
**ज्ञानतश्चानयोर्भेद आह्निकेऽस्मिन् परीक्षितः ॥ १ ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृतायां वैशेषिकसूत्रवैदिकवृत्तौ-
दशमाध्यायस्याद्यमाह्निकम् ।



# अथ दशमोऽध्यायः।

## द्वितीयमाह्निकम्।

कारणभेदात्कार्य्यभेद इत्युक्तम्, कारणं च त्रिविधं=समवायिकारणम्, असमवायिकारणं, निमित्तकारणमिति, तत्र समवायिकारणं परीक्षयन्नाह—

"**कारणमिति द्रव्ये कार्य्यसमवायात्** ॥ १ ॥

कारणमिति=समवायिकारणमिति प्रतीतिप्रयोगौ द्रव्ये=द्रव्यमात्रे द्रष्टव्यौ। कुतः? कार्य्यसमवायात्=कार्य्याणि द्रव्यगुणकर्माणि, तेषां तत्रैव समवायादित्यर्थः।

**यत्समवेतं कार्य्यमुत्पद्यते, तत्समवायिकारणम्।** यथा—तन्तवः पटस्य, पटश्च स्वगतरूपादेः। तच्च द्रव्यमेव भवति, न गुणो, न कर्म। यतस्तत्रैव द्रव्यगुणकर्माणि कार्य्याणि समवयन्ति। तस्मात्समवायिकारणमिति व्यवहारो द्रव्यमात्रे द्रष्टव्यो, नान्यत्रेति भावः।

**तत्र अनन्यथासिद्धकार्य्यनियतपूर्ववृत्ति कारणम्। किमुक्तं?** यदन्यथासिद्धं न भवति, कार्य्याच्च नियमेन पूर्वं वर्तते, तत् **कारणम्।** अन्यथासिद्धश्च पञ्चधा—तत्र—**यत्कार्य्यं प्रति कारणस्य पूर्ववृत्तिता येन रूपेण गृह्यते, तत्कार्य्यं प्रति तद्रूपमन्यथासिद्धं,** यथा—घटं प्रति दण्डत्वमिति प्रथमः (१)। **यस्य स्वातन्त्र्येणान्वयव्यतिरेकौ न स्तः, किन्तु कारणमादायैव तौ गृह्येते, तदन्यथासिद्धम्,** यथा—घटं प्रति दण्डरूपमिति द्वितीयः (२)। **अन्यं प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्य्यं प्रति पूर्ववृत्तित्वं गृह्यते, तत् तत्कार्य्यं प्रत्यन्यथासिद्धं,** यथा—घटादिकं प्रत्याकाशम्। तस्य हि घटादिकं प्रति कारणत्वमाकाशत्वेनैव स्यात्। तच्च शब्दसमवायिकारणत्वम्। एवञ्च तस्य शब्दं प्रति कारणत्वं गृहीत्वैव घटादिकं प्रति कारणत्वं ग्राह्यम्। अतस्तदन्यथासिद्धमिति तृतीयः (३)। **यत्कार्य्य-**

**जनकं प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्य्यं प्रति पूर्ववृत्तित्वं गृह्यते, तत् तत्कार्य्यं प्रत्यन्यथासिद्धं,** यथा कुलालपिता घटं प्रति । तस्य च कुलालपितृत्वेन रूपेण घटं प्रति जनकत्वेऽन्यथासिद्धत्वं मन्तव्यं, न कुलालत्वेन रूपेण, तेन कुलालमात्रस्य घटं प्रति जनकत्वादिति तुरीयः (४)। **येनावश्यक्लृप्तनियतपूर्ववर्तिना कार्य्यं सम्भवति, तद्भिन्नं सर्वमन्यथासिद्धम्,** यथा=घटं प्रति रासभादिकमिति पञ्चम· (५)। एतेषु पञ्चस्वन्यथा सिद्धेषु पञ्चमोऽन्यथासिद्धः आवश्यकः, तेनैवान्येषां चरितार्थत्वात् । शिष्यबुद्धिवैशद्यार्थं चेह तदुपन्यासः । अत एव **नव्याः "लघुनियतपूर्ववर्तिन एव कार्य्यसम्भवे तद्भिन्नमन्यथासिद्धम् ।** लघुत्वं च त्रिविधं—शरीरकृतम्, उपस्थितिकृतं, सम्बन्धकृत च । तत्र प्रथमम्—अनेकद्रव्यसमवेतत्वापेक्षया महत्त्वे, द्वितीयं गन्धं प्रति रूपप्रागभावापेक्षया गन्धप्रागभावे, गन्धस्य प्रतियोगिन उपस्थितत्त्वेन शीघ्रं तदुपस्थितेः, तृतीयं दण्डत्वदण्डरूपाद्यपेक्षया दण्डादौ, स्वाश्रयसंयोगादिरूपपरम्पराया गुरुत्वादित्येकविधमेवान्यथासिद्धमाहुः ॥

**तदे**तत्कारणं त्रिविधं—समवायिकारणम्, असमवायिकारणं, निमित्तकारणं च । **यत्समवेतं कार्यमुत्पद्यते, किमुक्तं?** यस्मिन् समवायसम्बन्धेन सम्बद्धं सत्=वर्तमानं भवत्कार्यमुत्पद्यते, **तत्समवायिकारणम् । किं बहुना** यद्धर्मावच्छिन्नं यद्धर्मावच्छिन्ने समवायसम्बन्धेनोत्पद्यते, तद्धर्मावच्छिन्नं प्रति तद्धर्मावच्छिन्नं समवायिकारणम् । यथा—तन्तवः पटस्य, पटश्च स्वगतरूपादेः ।

**समवायिकारणे प्रत्यासन्नं यत्कारणं, तदसमवायिकारणम् ।** प्रत्यासत्तिश्च द्विविधा—कार्य्यैकार्थप्रत्यासत्तिः, कारणैकार्थप्रत्यासत्तिश्च । तत्राद्या लघ्वी, द्वितीया च महतीति वैशेषिकी परिभाषा । समवायसम्बन्धः कार्य्यैकार्थप्रत्यासत्तिः, स्वसमवायिसमवायसम्बन्ध· कारणैकार्थप्रत्यासत्तिः । तथा चात्मविशेषगुणभिन्नत्वे सति समवायस्वसमवायिसमवायान्यतरसम्बन्धेन समवायिकारणे प्रत्यासन्नं कारणमसमवायिकारण-

मिति पर्य्यवसितम्। आद्यं यथा—घटादिकं प्रति कपालसंयोगादिकमसमवायिकारणम्। तस्य घटादिसमवायिकारणे कपालादौ समवायेन प्रत्यासन्नत्वात्। द्वितीयं—घटरूपं प्रति कपालरूपमसमवायिकारणम्। तस्य घटरूपसमवायिकारणे घटे स्वसमवायिसमवायसम्बन्धेन प्रत्यासन्नत्वात्। अत्र घटरूपं स्वसमवायिकारणे घटे वर्त्तते, कपालरूपं च कपाले। समानाधिकरणयोरेव च कार्य्यकारणभावः। अतो घटरूपकारणेन घटेन सह कपालरूपस्यैकस्मिन्नर्थे कपाले समवेतत्वात् स्वसमवायिसमवायसम्बन्धेन सामानाधिकरण्यमुपपन्नम्। स्वं=कपालरूपम्।

**तदुभयभिन्नं कारणं निमित्तकारणम्।** यथा घटादिकं प्रति दण्डादिकमितिविवेकः ॥ १ ॥

**द्रव्ये** समवायिकारणमिति व्यवहारे हेत्वन्तरं समुच्चिनोति—

**"संयोगाद्वा ॥ २ ॥**

कारणमितिद्रव्ये इत्यनुवर्त्तते। चार्थो वाकारः। कार्य्यासमवायिकारणसंयोगाश्रयत्वाच्च समवायिकारणमिति द्रव्यमात्रे व्यवहर्त्तव्यमित्यर्थः।

**कपालसंयोगो** घटस्य, तन्तुसंयोगश्च पटस्यासमवायिकारणम्। तदाश्रयत्वात् कपालादिकं समवायिकारणमित्यादिकं स्वयमूह्यम्। **किमुक्तं?** कार्य्यासमवायिकारणं संयोगो यत्र समवैति, तत्समवायिकारणम्। संयोगश्च गुणः, न च तत्समवायो गुणे, कर्मणि वा सम्भवति। द्रव्यस्यैव गुणाश्रयत्वनियमात्। अतो द्रव्यमात्रे समवायिकारणमिति व्यवहारोऽसमवायिकारणसंयोगाश्रयत्वाद्वा कर्तव्य इति भावः ॥ २ ॥

**नन्व**समवायिकारणमिति क्व व्यवहर्त्तव्यं? तत्राह—

**"कारणे समवायात्कर्माणि ॥ ३ ॥**

कारणमित्यनुवर्त्तते। कारणे=संयोगविभागवेगानां समवायिकारणे द्रव्ये समवायात्=समवेतत्वात्कर्माणि=असमवायिकारणानि कर्माणि, **किमुक्तम्?** असमवायिकारणमिति कर्मणि व्यवहर्त्तव्यमित्यर्थः।

**कार्य्यैकार्थकारणैकार्थान्यतरप्रत्यासत्त्या** समवायिकारणे प्रत्यासन्नं यत्कारणं, तदसमवायिकारणम्। तत्र संयोगविभागवेगाः कार्य्याणि यस्मि-

न्नर्थे समवयन्ति, तत्रैव कार्य्यैकार्थप्रत्यासत्त्या, **किमुक्तं** ? समवायसम्बन्धेन कर्म प्रत्यासीदति । तस्माल्लब्ध्या प्रत्यासत्त्या संयोगादिकार्य्याणां समवायिकारणे प्रत्यासन्नत्वादसमवायिकारणानि कर्माणि, **किमुक्तम्** ? असमवायिकारणमिति कर्मणि व्यवहर्तव्यमिति भावः ॥ ३ ॥

अतिदिशति—

**"तथा रूपे कारणैकार्थसमवायाच्च ॥ ४ ॥**

कारणमित्यनुवर्तते । तथा=यथा कार्य्यैकार्थप्रत्यासत्त्या समवायिकारणे प्रत्यासन्नत्वादसमवायिकारणमिति कर्मणि व्यवहारः, तथा कारणैकार्थसमवायाच्च=कारणैकार्थप्रत्यासत्त्या, **किमुक्तं** ? स्वसमवायिसमवायसम्बन्धेन समवायिकारणे प्रत्यासन्नत्वाच्च रूपे=उपलक्षणमेतत्, अवयवगतरूपादावसमवायिकारणमिति व्यवहर्तव्यमित्यर्थः ।

घटरूपस्यासमवायिकारणं कपालरूपं, पटरूपस्य चासमवायिकारणं तन्तुरूपम् । तच्च महत्या प्रत्यासत्त्या, **किमुक्तं** ? स्वसमवायिसमवायसम्बन्धेन घटरूपादिसमवायिकारणे प्रत्यासीदति । घटरूपादिसमवायिकारणेन घटादिना सह कपालादिरूपैकस्मिन्नर्थे समवेतत्वात् । अतः कारणैकार्थसमवायाच्चावयवगतरूपादावसमवायिकारणमिति व्यवहारः कर्तव्य इति भावः ॥ ४ ॥

**"कारणसमवायात्संयोगः पटस्य ॥ ५ ॥**

कारणमित्यनुवर्तते । कारणसमवायात्=पटसमवायिकारणेषु तन्तुषु समवेतत्वात्=कार्य्यैकार्थप्रत्यासत्त्या प्रत्यासन्नत्वात्संयोगः=तन्तुसंयोगः पटस्य=पटरूपकार्य्यस्यासमवायिकारणमित्यर्थः ।

यथा—तन्तुसंयोगः पटसमवायिकारणेषु तन्तुषु समवेतत्वात्पटस्यासमवायिकारणं, तथा कपालसंयोगो घटस्यासमवायिकारणमित्यादि स्वयमुत्प्रेक्षणीयम् ॥ ५ ॥

**"कारणकारणसमवायाच्च ॥ ६ ॥**

कारणं संयोग इत्यनुवर्तते । महत्परिमाणस्य समवायिकारणं तूलपिण्डः, तस्य समवायिकारण तूलपिण्डावयवः, तत्र कारणस्य कारणे समवेत-

त्वाच्च संयोगः=प्रचयाख्यस्तूलपिण्डावयवसंयोगः कारणं तूलपिण्डमहत्त्वं प्रत्यसमवायिकारणमित्यर्थः ।

द्वाभ्यां तूलपिण्डाभ्यां प्रचिताभ्यां समारब्धे तूलपिण्डे यन्महत्त्वमुत्पद्यते, तत्र समवायिकारणं तूलपिण्डः, असमवायिकारणं प्रचयाख्यस्तूलपिण्डद्वयसंयोगः । स च कारणस्य कारणे समवैति । तेन महत्या प्रत्यासत्त्या, **किमुक्तं ?** स्वसमवायिसमवायसम्बन्धेन कार्य्यसामानाधिकरण्यसम्भवाद् भवति महत्परिमाणे कार्येऽसमवायिकारणं प्रचयाभिधानः संयोग इति भावः ॥ ६ ॥

समवायिकारणमसमवायिकारणं च परीक्षितम्, इदानीं निमित्तकारणपरीक्षामारभमाण आह—

**"संयुक्तसमवायादग्नेर्वैशेषिकम् ॥ ७ ॥**

कारणमित्यनुवर्तते । अग्नेः=तेजसो वैशेषिकं=स्वार्थे तद्धितः, विशेषगुणात्मकमौष्ण्यम्=उष्णस्पर्श इति यावत्, संयुक्तसमवायात्=स्वाश्रयसंयोगसम्बन्धात्कारणं=पाकजरूपादिषु निमित्तकारणमित्यर्थः ।

तत्र स्वम्=उष्णस्पर्शः, तस्याऽऽश्रयोऽग्निः, तत्संयुक्ताः फलादयः, तत्र समवायेन पाकजरूपादीनामुत्पत्तिः । फलादिकं समवायिकारणं, तेजःसंयोगोऽसमवायिकारणम्, उष्णस्पर्शोऽदृष्टादिकं च निमित्तकारणमिति विवेकः ।

आत्मविशेषगुणाः बुद्ध्यादयः सर्वत्र निमित्तकारणतामेव भजन्ते, नासमवायिकारणतां क्वचित् । अत एवासमवायिकारणलक्षणे तद्भिन्नत्वनिवेशः । तेषां, तद्भिन्नानां च निमित्तकारणानां परीक्षा स्वयमुत्प्रेक्षणीया । सुगमत्वान्न तानि महर्षिणा परीक्ष्यन्ते । समवाय्यसमवायिकारणभिन्नं कारण च निमित्तकारणमिति बोध्यम् ॥ ७ ॥

पदार्थाः खलूद्दिष्टाः लक्षिताः यथास्थानं परीक्षिताश्च, तेषामेव तत्त्वज्ञानान्निःश्रेयसं, तत्त्वज्ञानं च धर्मविशेषादित्युक्तम्; धर्मविशेषश्च वैदिककर्मानुष्ठानजन्यः सुकृतविशेषः, वैदिककर्मानुष्ठानं च श्रद्धातिशयमन्तरेण नोपपद्यते, तस्मादत्र दृष्टफलानुपलम्भात् तत्त्वज्ञानाभिलाषुकाणामार्य्याणामश्रद्धा मा भूत्; अनुष्ठानं च यथाशक्ति सततमनुवर्तेत, इत्यनुसन्द-

धानः परमकारुणिको महर्षिस्तत्र श्रद्धातिशयमुत्पादयितुमन्तेवासिनस्तावद् विश्वासयति—

**"दृष्टानां दृष्टप्रयोजनानां दृष्टाभावे प्रयोगोऽभ्युदयाय ॥ ८ ॥**

दृष्टानां=वेदोपलब्धानां=भगवता जगदधिपतिना साक्षादुपदिष्टानां वेदविहितानां कर्मणां दृष्टप्रयोजनानां=दृष्टं=वेदेभ्योऽवगतम्, **अथवा** महर्षिभिः पूर्वैर्यथाविध्यनुष्ठानात्साक्षात्कृतं प्रयोजनम्=ऐहिकामुष्मिकं फलं येषां, तेषां दृष्टादृष्टप्रयोजनानां दृष्टाभावे=दृष्टफलप्राप्त्यभावे प्रयोगः=यथाविध्यनुष्ठानमभ्युदयाय=परत्राभीष्टकार्य्याणामुदयाय वेदितव्यमित्यर्थः ।

**यथा**विध्यनुष्ठितं हि वैदिकं कर्म नियमेन दृष्टादृष्टप्रयोजनं प्रसूते । यत्र क्वचिद् भूरिप्रतिबन्धकवशाद् दृष्टं फलं नोपलभ्येत, तत्रादृष्टं फलं निश्चेतव्यम् । अनुष्ठानाच्च न जातु विरन्तव्यम् । साक्षादीश्वरेण जगदधिपतिनोपदिष्टं खल्वेतद्वैदिकं कर्म । तत्कथं निष्फलं भवेत् । अतः श्रद्धातव्यम् । तद्यथाम्नातं भगवति वेदे. **"श्रद्धां देवा यजमाना वायुगोपा उपासते"** (ऋ. मं १० अ. १२ सू. १५१) इति । श्रद्धामूलं हि सर्वं फलम् । अत एवाम्नन्ति छन्दोगाः **"श्रद्धत्स्व सोम्य ?** (छां-प्र-६-खं-१२३) इति । न च श्रद्दधानस्य किञ्चिद्दुर्लभं विद्यते । तस्माद्वो श्रद्धातव्याः वेदाः, यथाविध्यनुष्ठातव्यं च तदुपदिष्टं निखिलं कर्म । यतोऽत्रैव भवतामार्य्याणां श्रेय इति भावः ॥ ८ ॥

**ननु** भगवता जगदधिपतिना साक्षादुपदिष्टमिति नोपपद्यते, तत्सद्भावे लिङ्गानुपलब्धेः, तत्राह—

**"अस्मद्बुद्धिभ्यो लिङ्गमृषेः ॥ ९ ॥**

अस्मद्बुद्धिभ्यः=अस्मच्छब्देन प्राणभृन्मात्रं गृह्णाति, तद्बुद्धिभ्यो विशिष्टा बुद्धिः ऋषेः=ऋषति=साक्षात्पश्यति निखिलं जगद् यः, स ऋषिः, तस्यैकर्षेः परमेश्वरस्य लिङ्गं=सद्भावे प्रमाणमित्यर्थः ।

**यत्**सातिशयं, तत्कुत्रचिन्निरतिशयम्, यथा—परिमाणं सातिशयं घटादौ, निरतिशयं गगनादौ । सातिशयाश्चास्मद्बुद्धयः, यतः कश्चित् किञ्चिदेव बुध्यते, कश्चिद् बहु, कश्चिद्, बहुतरम् । अतः कयाचिन्निरतिशय-

या विशिष्टया बुद्ध्याऽपि भवितव्यम्। सेयं विशिष्टा बुद्धिर्यत्र वर्तते, स-एव जगदधिपतिरीश्वर इति भावः॥ ९॥

**नन्वेवं** तर्हीश्वरोपदिष्ट कर्मानुष्ठातुं शक्यते, न वेदोपदिष्टं, तस्य प्रामाण्याभावात्, तत्राह—

**"तद्वचनादाम्नायस्य प्रामाण्यम्॥ १०॥**

तद्वचनात्=तस्यर्षेः परमेश्वरस्य वचनात्=कथनात्, **किमुक्तं**? तेनेश्वरेण प्रणयनादाम्नायस्य=भगवतो वेदस्य प्रामाण्य=स्वतः प्रमाणत्वमस्तीत्यर्थ.।

**यस्तावद्** वेदानामुपदेशः, स एव भगवतो जगदधिपतेरीश्वरस्योपदेशोऽस्ति, न ततोऽन्यः कश्चित् तदुपदेशो विद्यते। वेदानामेवेश्वरीयत्वस्य श्रुतिस्मृतियुक्तिभ्यो निर्धारणात्। विस्तरस्त्वस्य मामक **आर्य्यसिद्धान्ते** द्रष्टव्यः। तथा च स्वतः प्रमाणं वेदाः इति निष्प्रत्यूहम्। तस्मादात्माभ्युदयमिच्छद्भिरार्य्यतनयैर्वेदोपदिष्टम्—अग्निहोत्राद्यश्वमेधान्तं सर्वं कर्म यत्नतोऽनुष्ठातव्यं, तदनुष्ठानार्हं पौरुषं च सर्वथा सम्पादयितव्यम्। स्वातन्त्र्यं हि वैदिककर्मानुष्ठाने नितान्तोपयुक्तमिति भावः॥ १०॥

**समवाय्यादिभेदेन त्रिविधं कार्य्यकारणम्।**
**प्रमाणत्वं च वेदानां द्वितीयेऽस्मिन् परीक्षितम्॥ १॥**
**कणादेन प्रणीतेयमर्थज्ञानोदकप्रपा।**
**मया हरिप्रसादेन वृत्त्या सम्यक् परिष्कृता॥ २॥**
**यत्प्रसादादियं वृत्तिर्नित्यं स्थास्यति निश्चला।**
**प्रह्वीभावेन वन्द्योऽसौ विद्यादातेश्वरः सदा॥ ३॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृतायां वैशेषिकसूत्रवैदिकवृत्तौ
दशमाध्यायस्य द्वितीयमाह्निकम्॥ २॥

समाप्तश्चायमात्मगुणभेदाध्यायो दशमः॥ १०॥

**॥ समाप्तश्चेदं दर्शनम्॥**

# वैशेषिकसूत्रवैदिकवृत्तेः शुद्धाशुद्धपत्रम्.



| पृष्टं. | पंक्तिः | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| ३ | १६ | त्त्वज्ञानं | त्त्वज्ञानं |
| १८ | २५ | निवृत्यर्थे | निवृत्त्यर्थे |
| १९ | १८ | [illegible] | सोऽव्यान्तर |
| २८ | ५ | इत्येतौ द्वौ | इत्येते द्वे |
| ३१ | १८ | आ महा | आमहा—एवमग्रेऽपि |
| ३३ | ८ | या या | [illegible]—एवमग्रेऽपि |
| ४३ | १४ | भूम्यादिम्यो | भूम्यादिभ्यो |
| ५० | २४ | पञ्चम्यास्तसिल् | पञ्चम्यास्तसिः |
| ५५ | १०-११-१२-१४ | कारणवत्व | कारणवत्त्व |
| ६२ | ४ | सूत्रयति | सूचयति |
| ६२ | १२ | नाऽत्मना | नाऽऽत्मना |
| ६९ | ९ | ॥ २ ॥ | ॥ १ ॥ |
| ७१ | ६ | अन्तरासिद्ध | अन्यतरासिद्धः |
| ७१ | १० | विशेपतोऽ | विशेप्यतोऽ |
| ७५ | ६ | यन्निष्यद्यते | यन्निष्पद्यते |
| ७५ | १७ | वैदिकान्तरा | वैदिकान्तराणि |
| ८० | १० | सूत्रिता | सूत्रिताः |
| ९१ | ७ | द्रव्यवत्वाद् | द्रव्यवत्त्वाद् |
| १०१ | १२-२६ | कामयति | कामयते |
| १०४ | ९-२० | तिर्य्यग् गम | तिर्य्यग्गम |
| १०४ | १० | नोदन· | नोदनं |
| १०४ | ११ | तिर्य्यग | तिर्य्यग् |
| १०७ | ५ | पु ज्या | पुज्या |
| १०७ | १३ | नोदनं | नोदनम् |
| ११० | ७-१० | विवस्वानं | विवस्वन्त |

| पृष्ठं. | पंक्तिः | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| १११ | ११ | श्ववायु | श्वासौ वायु |
| ११३ | ११ | अवशेषाद् | अविशेषाद् |
| १२१ | १९ | प्रभृति निखि | प्रभृतिनिखि |
| १२२ | ३ | "ददातिः=उच्चा | ददातिः="उच्चा |
| १२३ | १० | यते | यति |
| १२३ | १६ | गमः | गमदोषः |
| १२४ | २० | नोऽपि | णोऽपि |
| १२६ | ४-९ | हस्तीकर्तुमा | हस्तेकर्तुमा |
| १२७ | ६-२२ | अपराङ्मुख्येन | आपराङ्मुख्येन |
| १२७ | १२ | भिच्छन्दतो | भिश्छन्दतो |
| १३२ | ७ | त्सुख | त्सुखं |
| १३९ | २२ | परावृर्ति | परावृत्ति |
| १४२ | १८ | सत्वात् | सत्त्वात |
| १४८ | ४ | दाऽऽनखा | |
| १४९ | १९ | नुर्वतते | |
| १४९ | २६ | विम्वीत्वाच्च | |
| १५२ | १० | संख्यात्वं | संख्यत्व |
| १५३ | १९ | भाव | भावः |
| १५३ | २६ | चैकानैक | चै |
| १६१ | १७ | थगभाव | |
| १६८ | १० | ज्ञान | |
| १६९ | २२ | च क्रियांयां | |
| १८४ | २६ | दारण्य | |
| १८५ | ५ | दारण्य | |

तकारस्य द्वित्वमद्वित्वं— वीप्सा

सन्निधानमसन्निधानञ्चान्यत्र स्वय ...